दृष्टिं हठेन पिदधाति न केलिकारः संवेदनं हरति हन्त न मूर्च्छना च।
मर्माणि संस्पृशति नो पिशुनश्च कश्चिदत्यद्भुतो वलभरोऽयमदृष्टपूर्वः ॥४२॥

इति बलभरस्य केलिकारितादिकारणाभावेऽपि दृष्टिपिधानादिरूपकार्यसंबन्धोपनिबन्धाद्विभावनासकीर्णा। यथा वा—

गण्डयोररुणिसादृशिभावः कोऽपि च भ्रुकुटिविभ्रमहेतुः।
सुभ्रुवां दयितसान्त्वनवर्जं मानकार्यका(क)रणाय मदोऽभूत् ॥४३॥

अत्र मानकार्यस्य मुखरागादेर्मदेन करणात्तत्तुल्यता मदस्य प्रतीयते। क्वचित्तु प्रश्नपूर्विकाऽपि भवति यथा—

तरलाविएहि दरविअसिएहिं तरुणीणं णअणकमलेहि।
अच्चिज्जसि अणुदिअहं जुआण कोहोसि मअणस्स ॥ ४४ ॥
[ तरलीकृतैः दरविकसितैः तरुणीनां नयनकमलैः।
अर्च्यसे अनुदिवसं युवन् को भवसि मदनस्य ॥ ]

अत्र मदनस्य कस्त्वमसीति प्रश्नात्तत्साद‍ृश्यं प्रतीयते। अत्र च नयनकमलैः अर्चनीयतारूपस्तद्धर्मो हेतुतयोपात्तः। क्वापि तदीयधर्मसंबधोऽर्थावसेयो भवति। यथा—

णवपुण्णिमामिअंकस्स सुहअ कोत्तोसि भणसु मम सच्चं।
कासोहअसमग्गा पओसरयणि व्व तुह अज्ज ॥ ४५ ॥
[ नवपूर्णिमामृगाङ्कस्य सुभग कस्त्वमसि भण मम सत्यम्।
का सौभाग्यसमग्रा प्रदोषरजनीव तवाद्य ॥ ]

अत्र नवपूर्णिमामृगाङ्कस्य कस्त्वमसीति प्रश्नाद् क्षणरागिता नवपूर्णिमामृगाङ्कवदर्थतोऽवगम्यते इत्यार्थमौपम्यम्। तदेव च का प्रदोषरजनीव तवाद्येति द्वितीयार्धे चोपोद्बलितम्।

जो सरहसपिअपरिरम्भपसारिअआनंदपरिमलो हिअए।
सो च्चिअ मुत्ताहारो सीअलसरसो ससिमुहीणम् ॥ ४६ ॥
[ यः सरभसप्रियपरिरम्भप्रसारितानन्दपरिमलो हृदये।
स एव मुक्ताहारो शीतलसरसः शशिमुखीनाम् ॥ ]

इत्यादि( दौ )शीतलत्वादिहारधर्मसंबंधेऽपि सामानाधिकरण्यनिर्देशात्सो· च्चिमहारो इति मुख्यनिषेधाच्चापह्नुत्यादय एव ॥ १३ ॥

## सकृद्धर्मस्य निर्देशेऽप्रस्तुतानां प्रस्तुतानां वा तुल्ययोगिता॥१४॥

आर्थमौपम्यमित्यनुषंगः स्मरणालंकारं यावत्। साधारणस्य धर्मस्य सकृदुपादाने अप्राकरणिकानां प्राकरणिकानामेव वा इवाद्यप्रयोगादार्थमौपम्यं तुल्ययोगिता। अत्र च प्रसिद्धगुणमुपमानमप्रसिद्धगुणमुपमेयमिति बोद्धव्यम्। अन्यथा परस्परमुपमानोपमेयतायामुपमेयोपमाया आर्थता स्यान्नोपमाया.। उदाहरणम्—

प्रणयोक्तिभिर्मुनिरपि प्रसेदिवानिति मे स शापतिमिरावधिं व्यधात्।
वशिनां रुषो मतिषु नासते चिरं जलविप्रुषश्च नृप शष्पसूचिषु ॥४७॥

प्रकृतयोर्यथा—

हर्षाश्रुलवकीर्णेन सत्पत्रावलिचारुणा।
वामेन पुस्फुरे तस्याश्चक्षुषा च स्तनेन च ॥ ४८ ॥

पूर्वस्मिन्नुदाहरणे मुनिः प्रसेदिवानिति विशेषस्य प्रकृतस्य वशिनामिति सामान्यात्मकप्रकृतः समर्थकतयोपात्त.। तस्य चास्थिरत्वेन प्रसिद्धा जलविप्रुष उपमानतयोपात्ताः। मुनिवृत्तान्तापेक्षया च द्वयोरप्युपमानोपमेययोरप्रकृतत्वम्। द्वितीयस्मिश्चक्षुषः स्फुरणस्य स्त्रीपुंससाधारणत्वेन प्रसिद्धत्वादुपमानता। क्वचित्प्रसिद्धाप्रसिद्धाभावे उपमेयोपमामूलतैव। यथा—

त्वदङ्गमार्दवं द्रष्टुः कस्य चित्ते न भासते।
मालतीशशिभृल्लेखाकदलीनां कठोरता ॥ ४९ ॥

अत्र मालत्यादीनां सर्वेषामेव कविसमये तुल्यैव प्रसिद्धिरिति न कस्यचिद्विशेषेणोपमानत्वं निर्णेतुं शक्यमित्यन्योन्यमेवोपमानोपमेयता ॥ १४ ॥

## मिश्राणां दीपकम् ॥ १५ ॥

सकृदित्यनुपज्यते। सकृद्धर्मोपादाने प्रस्तुताप्रस्तुतानां मिश्रत्वे आर्थमौपम्यं दीपकम्। यथा—

अहो विधात्रा सृजता जगन्ति चत्वारि रत्नानि विनिर्मितानि।
राजैष भोजश्च मनोभवश्च शशी च मासः कुसुमाकरश्च ॥

अथवा—

अहो महत्साहसमेतदेव यद्वर्णनीयो नवसाहसाङ्कः ।
दूरे परिच्छेदकथा हि सत्यमेतद्गुणानामुदधेरपां च ॥ ५१ ॥

अत्र गुणानां प्रस्तुतानामपां चाप्रस्तुतानां परिच्छेदकथाभावाख्यो धर्मः सकृन्निर्दिष्टः । आद्ये चत्वारि रत्नानीति साधारणो धर्मः सकृदुपात्तो भोजादिभिरुपमेयोपमानैरनेकैरेकवचननिर्दिष्टैः सह साक्षात् संबन्धं भजत इत्यसमञ्जसमुदाहरणम् । एवं—

योगपट्टो जटाजालं तारवी त्वग् मृगाजिनम् ।
उचितानि तवाङ्गेषु यद्यमूनि तदुच्यताम् ॥ ५२ ॥

इत्यादावुचितानीति बहुवचननिर्दिष्टो धर्मो योगपट्टादीनि प्रत्येकं नान्वेतीति तुल्ययोगितायामपि दुष्टैव ।

संचारपूतानि दिगन्तराणि कृत्वा दिनान्ते निलयाय गन्तुम् ।
प्रचक्रमे पल्लवरागताम्रा प्रभा पतङ्गस्य मुनेश्च धेनुः ॥ ५३ ॥

र. २. १५.

इत्यत्र दिनान्तवर्णने धेनुवत्पतङ्गप्रभाया अपि प्राकरणिकत्वात्तुल्ययोगितैवेति दीपकभ्रमो न कार्यः । इह तु—

आलिङ्गितुं शशिमुखीं च सुधां च पातुं
कीर्तिं च साधयितुमर्थयितुं च लक्ष्मीम् ।
त्वद्भक्तिमद्भुतरसां हृदये च कर्तुं
मन्दादरं जनमहं पशुमेव मन्ये ॥ ५४ ॥

यद्यपि वह्वीनां क्रियाणां सकृन्निर्दिष्टं कारकं न धर्मस्तथापि मन्दादरादिविशिष्टकारकसंबधः तथाविधाद्विलक्षणः प्रकृताप्रकृतरूपाणां क्रियाणामस्त्येवेति दीपकमेव । प्रकृतानां क्रियाणामेककारकसंबन्धे यथौपम्यप्रतीतिस्तत्तुल्ययोगिता तदभावे तु समुच्चयालङ्कारः ॥ १५ ॥

वाक्यद्वयेऽसकृत्प्रतिवस्तूपमा ॥ १६ ॥

धर्मस्य निर्देश इत्येव । वाक्यार्थयोरुपमानोपमेयभावस्यार्थत्वे साधारण धर्मस्यासकृदुपादाने प्रतिवस्तूपमा । कथितपदस्य दुष्टत्वाद्वाक्यद्वये शब्दभेदेन पृथङ्निर्देशः । इयं च प्रकृताप्रकृतोभयनिष्ठत्वेन द्वि(त्रि)भेदा । क्रमेण यथा—

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य ।
दूरीकृता खलु गुणैरुद्यानलता वनलताभिः ॥ ५५ ॥

शा. १.१७

अत्रांतःपुरेपूद्यानेषु च वपुषो लतानां च दुर्लभत्वं समानो धर्मो वाक्यद्वये दुर्लभं दूरीकृता इति पृथगुपात्तः । आलंबनोद्दीपनविभावात्मकत्वाद्वपुषो लतानां च प्रकृतत्वम् ।

जाग्रतः कमलाल्लक्ष्मी यज्जग्राह तदद्भुतम् ।
पादद्वंद्वस्य मत्तेभगतिस्तेये तु का स्तुतिः ॥ ५६ ॥

अत्र ग्रहणं साधारणो धर्मः उत्तरवाक्ये स्तेयपदेनोपात्तः । वर्णनीयकान्ताभिप्रायेण द्वयोरपि पद्ममत्तेभयोरप्रकृतत्वम् ।

यदि दहत्यनलोऽत्र किमद्भुतं यदि च गौरवमद्रिषु किं ततः ।
लवणमम्बु सदैव महोदधोः प्रकृतिरेव सतामविषादिता ॥ ५७ ॥

अत्र स्वभावरूपोऽर्थः किमद्भुतमित्यादिभिः शब्दान्तरैरुपात्तः । सतां प्रकृतानामन्येषां चाप्रकृतानामार्थमौपम्यम् । क्वचित्तु—

तृणं कान्ता विरक्तस्य तृणं शूरस्य जीवितम् ।
तत्त्वज्ञस्य तृणं शास्त्रं निस्पृहस्य तृणं तपः ॥ ५८ ॥

इत्यादौ यथा तृणादिशब्देनावज्ञास्पदत्वादिप्रतीतिर्न तथा तत्पर्यायाश्रयेण तुसादिशब्देनेति तस्यैव पुनः प्रयोगो न दोषः प्रत्युत तुसमिति क्रियमाणे प्रक्रमभङ्गः स्यात् । वैधर्म्येण यथा—

चकोर्य एव चतुराश्चन्द्रिकाचामकर्मणि ।
विनावन्तीर्न निपुणाः सुदृशो रतनर्मणि ॥ ५९ ॥ इति ।

अत्र च यद्यपि चातुर्यस्य न निपुणा इत्यनेनाभावप्रतिपादनादेकस्य धर्मस्यासकृन्निर्देशाभावस्तथापि वैधर्म्यस्य साधर्म्याक्षेपकत्वादवन्तीनां रते निपुणत्वेन प्रतीतेरर्थाच्चातुर्यस्यासकृन्निर्देश । यथा वा—

सोऽभूत्तदभ्यागमनेन सद्यःप्रणम्रीभवत्क्रोधविकारवृक्षः ।
तावद्बभूवोद्धत एव विंध्यो मुनिः प्रपेदे प्रणये न यावत् ॥६०॥ इति ।
महीभृतः पुत्रवतोऽपि दृष्टिस्तस्मिन्नपत्ये न जगाम तृप्तिम् ।
अनन्तपुष्पस्य मधोर्हि चूते द्विरेफमाला सविशेषसंगा ॥ ६१ ॥

कु० १.२७

इत्यादिका तु न वैधर्म्येण प्रतिवस्तूपमोदाहार्या । दृष्टिस्तृप्तिं न जगाम अपि तु तस्यामेव सक्तेत्ययमेवार्थ उपमानवाक्ये सविशेषसङ्गेत्यनेनोपात्तः । अभिहितविपरीतो ह्यर्थो विधर्मा तस्य भावो वैधर्म्यम् । यथा चकोर्य इत्यत्र चकोरीणा प्रतिपादितस्य चातुर्यस्य विपरीतोऽर्थस्तदभाव उपमानवाक्ये चकोरीतुल्यावन्तीव्यतिरिक्ता अन्या युवतयो न निपुणा इत्यभिहित. । न चात्र नञादिप्रयोगमात्राद्वैधर्म्यमिति वक्तव्यम् । " स्थितो देवदत्त न गत " इत्यत्र पर्यायप्रयोगेऽपि वैधर्म्यप्रसङ्गात् ॥ १६ ॥

## प्रतिबिम्बेन दृष्टान्तः ॥ १७ ॥

वाक्यद्वय इत्याद्यनुपक्तमेव । वाक्यद्वये धर्मस्य प्रतिबिम्बने बिम्बप्रतिबिम्बभावेनावस्थाने आर्थमौपम्य दृष्टान्तः । अयमपि साधर्म्यवैधर्म्याभ्यां द्विविध. । यथा—

दढरोसकलसिअस्स वि सुअणस्स मुहाहि विप्पिअं कत्तो ।
राहुमुहम्मि वि ससिणो किरणा अमअं चिअ मुअन्ति ॥ ६२ ॥
[ दृढरोषकलुषितस्यापि सुजनस्य मुखाद्विप्रियं कुतः ।
राहुमुखेऽपि शशिन किरणा अमृतमेव मुञ्चन्ति ॥ ]

अत्र विप्रियाभावामृतमोचनयोर्भावाभावयोर्बिम्बप्रतिबिम्बभावः । न च वैधर्म्यम् । परस्परविरोधे तद्भावात् । न चात्र विरोध. । अपकाराकरणवदमृतमोचनरूपस्योपकारस्याप्यर्थनीयत्वेन तुल्यत्वात् । अत एव चार्थमौपम्यम् । एवमन्यत्र ज्ञेयम् । यथा वा—

इह किं मति स्फुरति मे तवाग्रतो नयशास्त्रनीरनिधिपारदृश्वनः ।
अवलीढविश्वतिमिरे दिवाकरे न हि जातु दीपकशिखा प्रगल्भते ॥६३॥

अत्र मतिप्रसरणाभावस्य दीपाप्रथनस्य चाभावयोरेव बिम्बप्रतिबिम्बभावः। एवं भावयोरपि ज्ञेयम्। वैधर्म्येण यथा—

विसमर्स्मि अविसण्णो धारअदि धुरं धुरंधरो जेव्व।
णहु दिणअरोवराए दिणस्स होइ अवलम्बणं ससीबिम्बं ॥६४॥

[ विषमेऽप्यवसन्नो धारयति धुरं धुरंधर एव।
न खलु दिनकरोपरागे दिनस्य भवत्यवलम्बनं शशिबिम्बम् ]

अत्र धूर्धारणाद्यवलम्बनभावादिना वैधर्म्येण प्रतिबिम्बितम्। अत्र विधर्मिणः शशिबिम्बादेरुपादानत्वप्रतीतेन दिनव्यवहारहेतुना दिनकरेण सह धुरंधरस्यार्थमौपम्यम्।

अब्धिर्लङ्घित एव वानरभटैः किं त्वस्य गम्भीरता-
मापातालनिमग्नपीवरतनुर्जानाति मन्थाचलः।
दैवीं वाचमुपासते हि बहवः सारं तु सारस्वतं
जानीते नितरामसौ गुरुकुलक्लिष्टो मुरारिः कविः ॥ ६५ ॥

इत्यादौ प्रतिवस्तूपमया सहास्य प्रचुरतरः सङ्करः। तथाहि जानाति जानीते इति ज्ञानाख्य एक एव धर्मोऽसकृन्निर्दिष्टः। अगाधावगाहित्वादिना गुरुकुलक्लिष्टत्वादेः प्रतिबिम्बनम् ॥ १७ ॥

## असति सम्बन्धे निदर्शना ॥ १८ ॥

असत्यसंभवति सम्बन्धे आर्थमौपम्यं निदर्शना। यथा—

कृताङ्गदः कम्बलकालियाभ्यां
यज्ञोपवीतीकृतशङ्खचूडः।
सतक्षकापादितकण्ठभूषो
बिभर्ति भङ्गीमशिवः शिवस्य ॥ ६६ ॥

अत्र शिवसम्बन्धिनीं भङ्गीं कथमन्यो बिभर्ति इति नास्ति वस्तुसम्बन्धः। ततश्च शिवभङ्गीसदृशीं भङ्गीं बिभर्तीत्यौपम्यं पर्यवसितम्। अत्रैवाशिवस्याकल्याणरूपस्य शिवभङ्गीधारणस्य च धर्मिधर्मयोर्विरूपयोः संघटनेति विषमालङ्कारोऽपि। यथा वा—

सारसारतरवस्तुसंग्रहे त्वन्मुखं किमपि खण्डितं प्रिये।
कान्तिमिन्दुशकलाद्वाददे तन्मृगादपि यदीक्षणद्वयम् ॥ ६७ ॥

अत्रेन्द्वादिसम्बन्धिनः कान्त्यादेरादानासंभवे तत्सदृशं कान्त्यादि प्रतीयते।

त्वत्पादनखरत्नानां यदलक्तकमार्जनम्।
इदं श्रीखण्डलेपेन पाण्डुरीकरणं विधोः ॥ ६८ ॥

इत्यादौ वाक्यार्थयोः सामानाधिकरण्यनिर्देशाच्छ्रौतारोपसद्भावेन वाक्यार्थरूपकं वक्ष्यत इति निदर्शनाबुद्धिर्न कार्या। अन्यथा मुखं चन्द्र इत्यादौ पदार्थरूपकेऽपि निदर्शनाप्रसङ्ग इति रूपकाभावः स्यात्। एवं च रूपकादेः सम्बन्धाभावस्य विद्यमानत्वान्निदर्शनापवादत्वम्। तेन श्रौतार्थसामानाधिकरण्यनिर्देशमन्तरेण यत्र सम्बन्धविघटनं तत्र निदर्शना। अन्यत्र तु रूपकम्। ननु नैव सत्यसम्बन्धे सम्बन्धरूपेणातिशयोक्तिप्रकारेणैवमादेर्व्याप्तत्वादतिशयोक्तिरेव तेन न निदर्शना पृथगलंकारः। नैवम्। यत्रौपम्यस्यार्थत्वे सम्बन्धविघटनं तत्र निदर्शना। यत्र तु तदभावस्तत्र वक्ष्यमाणनयेन "दाहोम्भः प्रसृतिम्पच" इत्यादौ असम्बन्धे सम्बन्धरूपोऽतिशयोक्तिप्रकारः।

सम्बन्धबाधे सति लक्षणातो यत्रोपमायाः प्रतिपत्तिरस्ति।
निदर्शना तत्र यदा तु किञ्चिद्वस्त्वेव लक्ष्येत तदा परे स्युः ॥

इयं चोपमानवृत्तस्योपमेये सम्भवात्प्रतिपादिता। विपर्ययेण यथा—

तुह चण्डि गण्डवाली वहुप्पमाणेण अरुणभावेण।
बालातवाहएसु हिण्डिज्जइ कमलकिसलएसु ॥ ६९ ॥
[ तव चण्डि गण्डपाली बहुप्रमाणेनारुणभावेन।
बालातपाहतेषु धावति कमलकिसलयेषु ॥ ]

चूडामणिपदे धत्ते यो देवं रविमागतम्।
सतां कार्यातिथेयीति बोधयन् गृहमेधिनः ॥ ७० ॥

इत्यादौ तथाविधाचलदर्शनेन सद्भिः क्रियमाणातिथिसपर्यां मनसि भवति इति यद्यपि बोधयन्निति णिचः तत्समर्थाचरणे प्रयोगात् संभवत्सम्बन्धमूलमार्थमौपम्यं प्रतिभासते तथापि पूर्वानुभूतेनातिथ्यादिना सदृशस्योपमाना-

देस्तपनादेर्दर्शनेन तत्स्मरणादार्थः स्मृत्यलंकारः। अननुभूतातिथिसपर्यादिबोधकत्वे तु

यैर्दृष्टोऽसि तदा ललाटपतितप्रासप्रहारो युधि
स्फीतासृक्स्रुतिपाटलीकृतपुरोभागः परान् पातयन्।
तेषां दुःसहकामदेहदहनप्रोद्भूतनेत्राञ्चल-
ज्वालालीभरभास्वरे स्मररिपावस्तंगतं कौतुकम् ॥ ७१ ॥

इत्यादिवत्तपनाद्यवगमादातिथ्यादेरवगम इति वस्त्वन्तरकरणात्मार्थे विशेषालंकारः इति संभवत्सम्बन्धात्रैवेह निदर्शनोक्ता।

प्रभाते पृच्छन्तीरनुरहसवृत्तं सहचरी-
र्नवोढा न व्रीडामुकुलितमुखीयं कथयति।
लिखन्तीनां पत्राङ्कुरमनिशमस्यास्तु कुचयो-
श्चमत्कारो गूढं करजपदमासां कथयति ॥ ७२ ॥

इत्यदावौपम्यमेव नास्ति इति पराभिप्रायेणापि सम्भवत्सम्बन्धनिबन्धना न निदर्शना। नाप्यस्मन्मतेन स्मृत्यादिरित्यादिणिच्यन्वययोगमात्रप्रत्ययदर्शनेनैवमादि यन्निदर्शनायामुदाहृतं तदलंकारस्वरूपात्यन्तापरिज्ञाननिबन्धनो भ्रमः इत्यलं बहुशो भ्रान्तोक्तिपर्यनुयोगेन ॥ १८ ॥

सदृशानुभवात् स्मरणे स्मृतिः ॥ १९ ॥

पूर्वानुभूतस्य सदृशवस्त्वन्तरदर्शनेन संस्कारप्रबोधात् स्मरणे यदार्थमौपम्यं सा स्मृतिः। यथा—

पूर्णेन्दुना मेघलवाङ्कितेन द्यां मुद्रितां सुन्दरि वीक्ष्यमाणः।
विवाहहोमानलधूमलेखामीलत्कपोलां भवतीं स्मरामि ॥ ७३ ॥

स्वशब्दानुपादाने यथा—

तिष्ठामः सौष्ठवेन स्फुटसुरतटिनीतीरकल्लोलमाला-
क्रान्ते शान्ते वनान्ते मदनकदनकृन्मूर्तिमाराधयन्तः।
नीलाम्भोजैः सरोजैस्सितपतगगतैर्बालशैवालवल्ल्या
वीचीभङ्गै रथाङ्गैर्हृदि यदि मदिराक्षी न सा ध्वन्यतेऽन्तः ॥७४॥

अत्र मदिराक्ष्या नेत्राद्यवयवसदृशनीलाम्भोजादिदर्शनात् स्मृतिर्ध्वन्यत इत्यनेनोपनिबद्धा । सादृश्यव्यतिरिक्तं स्मरणं न कश्चिदलंकारः । यतः शृङ्गारादिरसव्यभिचारिभावभूतस्य स्मरणस्य विभावाद्यभिव्यक्तत्वे भावध्वनि । एवंविधे विषये प्रेयोलङ्काराभ्युपगमे तु वक्ष्यमाणनयेन भावध्वनेर्निर्विषयत्वप्रसङ्गः । यदा तु व्यभिचारिभूतस्यापि स्मरणस्य प्रधानवाक्यार्थीभूतत्वे स्वशब्दोपादानं तदा न स्मृत्यलंकार । नापि भावध्वनि । न च कश्चिद्दोष । प्रकृतरसपरिपोषस्याखण्डितत्वात् । यथा—

अनियतरुदितस्मितं विराजत्कतिपयकोमलदन्तकुड्मलाग्रम् ।
वदनकमलकं शिशोः स्मरामि स्फुरदसमञ्जसमुग्धजल्पितं ते ॥७५॥

अत्र प्रत्युत स्वशब्दोपादानव्यतिरेकेण ( न ) तथारसपरिपोषः इति तदेव साधु । न चैवमादौ स्वशब्दोपात्तस्य स्मृत्यादेर्व्यभिचारिणो रसोपस्कारकत्वेन प्रेयोलंकारो भवत्विति सम्भावनीयम् । न हि व्यभिचारिणां रसोपस्कारकत्वमलंकारत्वे प्रयोजकम् । भावध्वनावपि रसोपस्कारकत्वस्यावस्थानादलंकारत्वप्रसङ्गात् । ततश्च स्वशब्दोपात्तस्मृत्यादिव्यभिचारिपरिपोषित एवमादौ करुणादिरसध्वनिरेव ।

काकार्यं शशलक्ष्मणः क्व च कुलं भूयोऽपि दृश्येत सा
दोषाणां प्रशमाय मे श्रुतमहो कोपेऽपि कान्तं मुखम् ।
किं वक्ष्यन्त्यपकल्मषाः कृतधियः स्वप्नेऽपि सा दुर्लभा
चेतः स्वास्थ्यमुपेहि कः खलु युवा धन्योऽधरं पास्यति ॥७६॥

इत्यादावहो कोपेऽपि कान्त मुखमित्याद्यवान्तरवाक्यार्थस्य स्मरणस्य विभावादिमुखेनैव प्रतीतिप्रसिद्धौ स्वशब्देनोपादान तदा व्यर्थतया दुष्टत्वम् । न तु रसपरिपोषखण्डना काचित् । सादृश्यनिमित्तस्यापि स्वशब्दानुपात्तस्य स्मरणस्य यद्यपि भाववर्गमध्यपातितया भावध्वनावन्तर्भावस्तथाप्यौपम्यसामर्थ्यलभ्यत्वेनालङ्कारतयाभिधानमिति सर्वं स्वस्थम् ॥ १९ ॥

अन्यासङ्गात्कौतुकविनोदो विनोदः ॥ २० ॥

असन्निहितेऽनुभूतेऽननुभूते वाभिलष्यमाणेऽर्थे प्रतिच्छन्दसदृशादिवस्त्वन्तरानुभवात्मकादन्यासङ्गात्कौतुकातिवाहनं विनोद । क्रमेण यथा—

कोपादपावृत्तमुखीषु यत्र प्रियासु गोत्रस्खलितेन यूनाम्।
विनोदहेतुर्मणिभित्तिभागास्तद्भूमिकालम्बनतो भवन्ति ॥ ७७ ॥

अत्र पराङ्मुखत्वेन प्रियाणामुत्कण्ठा युवभिस्तत्प्रतिबिम्बयुक्तमणिभित्तिदर्शनेनातिवाहिता।

तक्खणविह्लपरम्मुहगोरिकओलत्तलम्मि सस्मरिए।
ओयारिऊण बहुसो दीसइ मुउडससिखण्डो ॥ ७८ ॥
[ तत्क्षणविह्वलपराङ्मुखगौरीकपोलस्थले संस्मृते।
अवतार्य बहुशो दृश्यते मुकुटशशिखंडः ॥ ]

अत्र गौर्याः पराङ्मुखीत्वेन कपोलस्यादर्शने तत्स्थशशिखण्डविलोकनेनोत्कण्ठातिवाहनम्। यथा च—

सुखाय श्रद्धालुः सरसिरुहमौक्षिष्ट विकचं
कटाक्षेभ्यो रज्यन्नचकमत पंक्तीर्मधुलिहाम्।
वियोगे गौराङ्ग्या भुजलतिकयोः किंच रसिको
नृपस्तोयाधारेष्वभिनवमृणालीरभजत ॥ ७९ ॥

णरणाह तुज्ज कित्तिप्पवाहमवलोइऊण दीहअरं।
अम्हेहि अज्ज गमिआ च्छिरोअहिदंसणोक्कण्ठा ॥ ८० ॥
[ नरनाथ तव कीर्तिप्रवाहमवलोक्य दीर्घतरम्।
अस्माभिरद्य गमिता क्षीरोदधिदर्शनोत्कण्ठा ॥ ]

अत्राननुभूतस्य क्षीरोदधेः कीर्तिप्रवाहदर्शनेनोत्कण्ठाया अतिवाहनम्।

वहुसो वि कहिज्जत्तं तुह वअणं मज्झ हत्तसंदिट्ठं।
ण सुअं त्ति जप्पमाणा पुणरुत्तसुअं कुणइ अज्ज ॥ ८१ ॥
[ बहुशोऽपि कथ्यमानं तव वचनं मम हस्तसंदिष्टम्।
न श्रुतमिति जल्पन्ती पुनरुक्तश्रुतं करोत्यद्य ॥ ]

अत्र सहशादेरर्थान्तरेण सन्देशश्रवणेन प्रियोत्कण्ठाया अतिवाहनम्। यथा च—

तत्स्पर्शशीतलसुखं विनिधेहि तावत्
पाणिं ममोरसि पुरः कथयिष्यसि त्वम्।
दुर्वारमन्मथशरानलजन्मनोऽस्य
तापस्य संप्रति मनाक् प्रशमो ममास्तु ॥ ८२ ॥ ॥२०॥

## अनुभवस्मृत्यादिप्रत्यूहो व्यासङ्गः ॥ २१ ॥

अन्यासङ्गादित्यनुपङ्गः। प्रक्रम्यमाणस्य प्रक्रान्तस्य वानुभवस्य स्मृतेरादिशब्दात् क्रियान्तरस्य वा पूर्ववदन्यासङ्गादन्तरायः प्रत्यूहो व्यासङ्गः। क्रमेण यथा—

दृष्टास्वप्ने झगिति कनकच्छेदगौरीषु यस्यां
दूरादभ्रंलिहगृहशिखासङ्गिनीष्वङ्गनासु।
सद्यो विद्याधरयुवतयः केलिपूर्वं प्रियाणां
हेमक्रीडासरसिजरजो लोचनेषु क्षिपन्ति ॥ ८३ ॥

अत्र भाविनोऽनुभवस्य क्रीडारविन्दरजःप्रक्षेपणेनान्तरायः।

तस्याः सान्द्रविलेपनस्तनतटप्रश्लेषमुद्राङ्कितं
किं वक्षश्चरणानतिव्यतिकरव्याजेन गोपाय्यते।
इत्युक्ते क्व तदित्युदीर्य सहसा तत्संप्रमार्ष्टुं मया
सा श्लिष्टा रभसेन तत्सुखवशात्तस्याश्च तद्विस्मृतम् ॥ ८४ ॥

अत्रानुभूयमानस्य स्तनमुद्राङ्कितत्वस्य संस्कार आलिङ्गनसुखानुभवेन तिरोहितः।

तत्र तीर्थसलिलेन दीर्घिकास्तल्पमन्तरितभूमिभिः कुशैः।
सौधवासमुटजेन विस्मरन् सश्चिकाय फलनिस्पृहस्तपः ॥ ८५ ॥

अत्र दीर्घिकादिस्मृतिसंस्कारस्तीर्थसलिलादिसदृशानुभवेनाच्छादितः।

उत्सृज्य गीतमसमाप्य विलासलास्य—
मङ्कादपास्य सहसा मणिवल्लकीं च।
अत्युन्मनास्तदवलोकनकौतुकेन
वातायनान् पथि रुरोह पुरंध्रिवर्गः ॥ ८६ ॥

अत्र गीतादेर्क्रियान्तरस्य प्रक्रान्तस्य नृपावलोकनकौतुकात्प्रत्यूहः। न चैवमादौ स्मृत्यादेर्व्यभिचारिभावस्य प्रशमनात् भावप्रशमध्वनावन्तर्भाव इति शङ्कनीयम्। स्मृत्यादेरिह प्रशान्तस्य तत्र प्रशाम्यत्त्वस्य विवक्षितत्वात्। तथाहि भावोदयध्वनौ भावस्य प्रागभावो न रसपरिपोषकः सर्वत्र लज्जाद्यनुत्पत्तौ तत्प्रसङ्गात्। नाप्युदिततया भावोदयध्वनिस्तस्य भावध्वनौ भावात् किम्पुनरुद्यदवस्था। तथात्र प्रशाम्यदवस्था भावप्रशान्तिः। न तु प्रध्वंसरूपा प्रशान्तता स्मृत्यादिप्रशान्ततताया अपस्मारादिसमयेऽपि भावात्। इह च स्मृत्यादिनिवृत्तेरेव विवक्षितत्वात्। इति न कश्चित्सङ्करः॥ २१॥

## उपमेयादन्यस्य न्यूनत्वं प्रतिकूलत्वं वा व्यतिरेकः ॥ २२ ॥

इह धर्माणां साधारणत्व उपमानोपमेयभावः। तत्र प्रसिद्धगुणत्वेनाधिकगुणस्योपमानत्वम्, विपर्ययादुपमेयत्वम्। तत्र यदोपमेयोत्कर्षार्थमुपमानस्य केनचिद्धर्मेण साम्येऽपि धर्मान्तरस्याभावान्न्यूनत्वमुपनिबध्यते, अर्थादितरस्याधिकगुणत्वम्, तदेको व्यतिरेकः। यत्र तूपमेयप्रतिकूलतोपमानस्य विवक्ष्यते स द्वितीयः। अत्र यद्युपमानादुपमेयस्यापि न्यूनधर्मत्वमुक्तेन न्यायेन सम्भवति, तथापि वस्तुतः प्रसिद्धगुणत्वेनाधिकगुणत्वात्सर्वत्रोपमानस्य तथात्वेनोपनिबन्धनं उपमातोऽधिकवैचित्र्याभावानन्यालङ्कारवदिह सूत्रे विपर्यये वेति नोक्तम्। भावे वा वक्ष्यमाणलक्षणोऽभेदालङ्कार एव स्यात्।

उपमानस्यान्यस्मादाधिक्यं हि स्वभावतः सिद्धम्।
तत्त्वे तेन न युक्तो व्यतिरेकश्चारुताविरहात्॥

यत्र चोपमानस्योपमेयविरुद्धत्वं विवक्ष्यते तत्रोपमानादुपमेयस्याधिक्यं इत्येतावतो लक्षणस्याव्याप्तिरितीह प्रतिकूलत्वं वेति सूत्रितम्॥ उदाहरणम्—

क्षीणः क्षीणोऽपि शशी भूयो भूयोऽपि वर्धतेतरां सत्यम्।
विरम प्रसीद सुन्दरि यौवनमनिवर्ति यातं तु॥ ८७॥

अत्रास्थिरतयोपात्ताच्छशिलक्षणादुपमानाद्यौवनस्योपमेयस्यैव गतस्य पुनरनागमनादधिकगुणत्वम्। यथा वा

नागेन्द्रहस्तास्त्वचि कर्कशत्वादेकान्तशैत्यात् कदलीविशेषाः।
लब्ध्वापि लोके परिणाहि रूपं जातास्तदूर्वोरुपमानबाह्याः॥ ८८॥

कुमार. १.३६

अत्र हस्तादेः परिणाहितया साम्येऽपि कर्कशादिना न्यूनगुणत्वम् ।

जनस्थाने भ्रान्तं कनकमृगतृष्णान्धितधिया
वचो वैदेहीति प्रतिपदमुदश्रु प्रलपितम् ।
कृतालङ्काभर्तुर्वदनपरिपाटीषु घटना
मयाप्तं रामत्वं कुशलवसुता न त्वधिगता ॥ ८९ ॥

इत्यत्रारामेण कथं रामत्वमवाप्यत इत्यसम्भवत्संबन्धनिदर्शनामूलः कुशलवसुता न त्वधिगतेति न व्यतिरेकः। अपि त्वतैलपूरा सुरतप्रदीपा इत्यादिवदभेदालंकार एव । कुशलवसुताप्राप्तिपरिहारेण रामान्मम न कश्चिद् भेद इति प्रतीतेः। भेदप्रतीतावप्यारोपितरामत्वस्यास्मदर्थस्य रामधर्मत्वाभावे सजातीयव्यतिरेकान्तर्भावः। एवं

यदङ्गनारूपसमुन्नतायाः कञ्चिद्गुणं भेदकमिच्छतीभिः ।
आराधितोद्धा मनुरप्सरोभिश्चक्रे प्रजाः स्वा अनिमेषचिह्नाः ॥९०॥

इत्यादौ यदङ्गनानामप्सरसां च निमेषमात्रकृतो भेद इत्यवगन्तव्यम्। न चाभेदालङ्कारस्य व्यतिरेकभेदतैवास्त्विति वाच्यम्। वैलक्षण्यजीवितत्वाद्व्यतिरेकस्य। अभेदस्य साम्यदार्ढ्यविवक्षया वैलक्षण्याभावेनाभेदप्राणत्वादत एवाभेद इत्यन्वर्थं संज्ञा। द्वितीयो यथा:—

स्वरेण तस्याममृतस्रुतेव प्रजल्पितायामभिजातवाचि ।
अप्यन्यपुष्टा प्रतिकूलशब्दा श्रोतुर्वितन्त्रीरिव बाधमाना ॥९१॥

अत्र पार्वतीस्वरप्रतिकूलः शब्दोऽन्यपुष्टाया इति विरुद्धत्वमुपमानस्य न तु न्यूनगुणत्वम्। अत्र च युवत्यन्तरे प्रसिद्धस्य साम्यस्येहापि सम्भावनायां तन्निवृत्त्यर्थं प्रतिकूलोक्तिः। साम्यासम्भावनायां यथा—"एमेअ जण" इत्यादि। अत्र चन्द्रस्य जनेनोपमानतया सम्भावितस्य वराकतोक्त्यातितुच्छत्वान्मुखेन सह दूरापास्तं साम्यमित्युपनिबद्धम्। न चास्मिन् द्वितीये व्यतिरेके वक्ष्यमाणलक्षणो वैधर्म्यालंकार इति शङ्कनीयम्। उपमानोपमेयभावस्य वास्तवत्वेन विवक्षणात्तत्र तस्याभावात् ॥ २२ ॥

सजातीयस्यातद्धर्मत्वं च ॥ २३ ॥

व्यतिरेक इत्यनुषङ्गः। येन यस्य सजातीयत्वं तस्यातद्धर्मत्वं च व्यतिरेकः। अतद्धर्मत्वं च सजातीयसम्बन्धिधर्माभावाद्विजातीयधर्मसद्भावाच्चेति द्विविधम्। न चास्य पूर्वलक्षितव्यतिरेकान्तर्भावः, उपमानोपमेयभावावलम्बित्वात्तस्य सजातीयानां च तदभावस्योपपादितत्वा(त्)। तत्र च यस्माद् व्यतिरेकस्तस्यैव न्यूनत्वमिति। इह त्वितरस्यापि। सजातीयत्वं च स्वाभाविकमध्यारोपितं वा। उदा०—

न पङ्कादुद्भूतिर्न जडसहवासव्यसनिता
वपुर्दिग्धं कान्त्या स्थलनलिनरत्नद्युतिमुषा।
व्यधास्यद्दुर्वेधा हृदयलघिमानं यदि न ते
त्वमेवैको लक्ष्म्याः परममभविष्यः पदमिह ॥ ९२ ॥

चक्षुस्तदुन्मेषि सदा मुखे वः सारस्वतं शाश्वतमाविरस्तु।
पश्यन्ति येनावहिताः कवीन्द्रास्त्रिविष्टपाभ्यन्तरवर्ति वस्तु ॥९३॥

शङ्खाः सन्ति सहस्रशो जलनिधेर्वीचिच्छटाघट्टिताः
पर्यन्तेषु लुठन्ति ये दलशतैः कल्माषितक्ष्मातलाः।
एकः कोपि स पाञ्चजन्य उदभूदाश्चर्यभूमिः सतां
यः संवर्तभरक्षमैर्मधुरिपोः श्वासानिलैः पूर्यते ॥ ९४ ॥

अत्र स्थलनलिनस्य नलिनान्तरसम्बन्धिपङ्कोद्भवत्वादिधर्माभावः, प्रतिभायामारोपितस्य चक्षुष्ट्वस्य चक्षुरन्तरासंभविसदोन्मेषादिसद्भावः। पाञ्चजन्यस्य शङ्खान्तरगतवीचिभङ्गुरत्वादिधर्माभावः, तदसम्भविमधुरिपुश्वासानिलापूरणसहत्वसद्भावश्चोपनिपद्धः ॥ २३ ॥

## अधिकगुणस्यानादरः प्रतीपम् ॥ २४ ॥

अधिकगुणस्योपमानस्यान्यस्य वा न्यक्कारेण तुल्यत्वापादनेन वानादरस्तिरस्कारः प्रतीपम्। न चाधिकगुणत्वाख्यकारणसद्भावेऽपि कार्यस्यादरस्यानुत्पत्त्यादिना विशेषोक्त्यादिः। अधिकगुणत्वेऽप्यादराभावोऽनादरो वेति कविनानुपनिबद्धत्वात्। किन्तु लक्षणे तथा निर्देशः। न च लक्षणेष्वलंकारो लक्ष्यनिष्ट(ष्ठ)त्वात्तेषाम्।

अधिकगुणत्वे हेतावुत्पत्तिर्नादराख्यकार्यस्य ।
एवं लक्षणमात्रं न तु लक्ष्यं नात्र तद्विशेषोक्तिः॥ इति

तत्रोपमानस्यानादरः क्वचिदुपमेयस्यैवोपमानभारोद्वहनसामर्थ्येनानुपयोगात्। क्वचिदुपमेयताकल्पनेनाप्रसिद्धतापादनात्। क्वाप्यनन्यसामान्यगुणस्यान्यसामान्यतापादनेन वा भवतीति त्रयो भेदाः। अर्थान्तरस्य तु न्यूनगुणत्वेन तत्कार्यकरणे नैरर्थक्यादवरतापादनाद्वेति द्वैविध्यम्। अधिकगुणत्वं चात्र वस्तुतः प्रसिद्धितो वा। उदा०—

मुद्धे कि विअ कीरइ कुवलअकण्णोलिआइ एआइ ।
ईसिं पहुत्तमेके कडक्खए पप्फुरन्तम्मि ॥ ९५ ॥ इति

[ मुग्धे किमिव क्रियते कुवलयकर्णोलिकया एतया।
ईषत्प्रभुत्वं एकस्मिन् कटाक्षके प्रस्फुरति ॥ ]

तुह मुहसारिच्छं ण लहइ त्ति संपुण्णमण्डलो विहिणा।
अण्णमअं व्व घडइउं पुणो वि खण्डिज्जइ मिअङ्को ॥ ९६ ॥

[ तव मुखसादृश्यं न लभत इति संपूर्णमण्डलो विधिना।
अन्यमयमेव घटयितुं पुनरपि खण्डयते मृगाङ्कः ॥ ]

यथा च वाराणसीवर्णने—

यस्यां सलोलतरणिस्तरुणीकपोल-
लावण्यपण्यपणनाम्बुजनव्यनीविः ।
अर्चींषि चर्चितनिशासमयानि माया-
हिंसानिशाचरवधूगतिरुन्धि धत्ते ॥ ९७ ॥

अत्र तरुणीकपोलसदृशान्यमूनीत्यर्थात्प्रतीयते इत्युपमानस्योपमेयता।

अहमेव गुरुः सुदारुणा( ना )मिति हालाहल तात मा स्म दृप्यः।
ननु सन्ति भवादृशानि भूयो भुवनेऽस्मिन् वचनानि दुर्जनानाम् ॥९८॥
भा. वि. १

अत्रानन्यसामान्यगुणस्य हालाहलस्यान्यसमानतोक्ता।

किं कर्णपूरैर्यदि साधुवादा मुक्ताफलैः किं यदि वाग्विलासाः ।
किं चूर्णयोगैर्यदि रूपशोभा लावण्यमास्ते यदि चन्दनैः किम् ॥ ९९ ॥

अत्र साधुवादादिभिरेव श्रोत्रशोभादिजननेन कर्णपूरादेरधिकगुणस्य कारणान्तरस्यानादर उपनिबद्धः । अत्र च यद्यपि कर्णपूरसाधुवादादीनां शोभाकारित्वेनोपमानोपमेयभावो यथाकथंचिद्वक्तुं शक्यते तथापि पूर्वोदाहरणेषूपमानत्वेन प्रसिद्धस्य कुवलयादेरुपमानस्य सतस्तिरस्कारः इह तु तिरस्कृतस्यैककार्यत्वादिना साधर्म्यमित्युपमानस्याविवक्षितत्वादर्थान्तरस्येत्युक्तम् । यथा च

खेलन्तीनां सुरपतिपुरीवारवाराङ्गनानां
यन्मञ्जीरध्वनितसुभगो रौति कोलाहलोऽयम् ।
तेनैवामी मदननृपतेर्माङ्गलिक्ये प्रबोधे
मोघायन्ते पथि पथि गिरः कच्छपारावतानाम् ॥ १०० ॥

यथा च

णिद्द च्चिअ वन्दिज्जिउ किं कीरउ देवआहिं अण्णाहिं ।
जिइ प्पसाएण पिओ लब्भइ दूरे वि णिवसन्तो ॥ १०१ ॥
[ निद्रैव वन्द्यते कि क्रियते देवताभिरन्याभिः ।
यस्याः प्रसादेन प्रियो लभ्यते दूरेऽपि निवसन् ॥ ]

अवरत्वापादने यथा

वैकुंठाय श्रियमभिनवां शीतभानुं भवाय
प्रादादुच्चैःश्रवसमपि वा वज्रिणे तत्क गण्यम् ।
तृष्णार्ताय स्वमपि मुनये यद्ददाति स्म देहं
कोन्यस्तस्माद्भवति भुवनेष्वम्बुधेर्बोधिसत्त्वः ॥ १०२ ॥

अत्र लक्ष्म्यादेरधिकगुणस्यापि तत्क गण्यमित्यनादरः । अस्य च न्यूनगुणानादराख्ये विरुद्धत्वमुखेनापि क्वचिदुपनिबन्धो यथा—

थणभुअमूलणिअम्बे पिआइ जुण्णाम्बराइ पेक्खन्तो ।
मुसलस्मि धावताइ बहु मण्णइ पामरोरोरम् ॥ १०३ ॥
[ स्तनभुजमूलनितम्बान् प्रियाया जीर्णाम्बरायाः प्रेक्षमाणः ।
मुसले व्यापृताया बहु मन्यते पामरोरोरम् ॥ ]

अत्र दारिद्र्यस्य न्यूनगुणस्यानादर ॥ २४ ॥

उद्दिष्टस्य प्रतिपक्षतयानुनिर्देशो वैधर्म्यम् ॥ २५ ॥

पूर्वाभिहितार्थापेक्षया प्रतिभटभूतानामर्थान्तराणां पश्चान्निर्देशो वैधर्म्यालङ्कारः । न चायं द्वितीयो व्यतिरेक साधर्म्यगन्धस्याप्यभावात् । उपमानोपमेयभावस्याविवक्षणाच्च । यथा—

नाथे श्रीपुरुषोत्तमे त्रिजगतामेकाधिपे चेतसा
सेव्ये स्वस्य पदस्य दातरि परे नारायणे तिष्ठति ।
यं कञ्चित्पुरुषाधमं कतिपयग्रामेशमल्पार्थदं
सेवायै मृगयामहे नरमहो मूढा वराका वयम् ॥ १०४ ॥

यथा च—

कुमुदवनमपश्रि श्रीमदम्भोजषण्डं
त्यजति मुदमुलूकः प्रीतिमांश्चक्रवाकः ।
उदयति दिननाथो याति शीतांशुरस्तं
हतविधिलसितानां ही विचित्रो विपाकः ॥ १०५ ॥

अस्य चालङ्कारान्तरसंसर्गे चारुत्वातिशयो जायते । यथा—

जाहेच्चिअ तुह चाओ ओसरिओ णिअणिचोलगब्भाहि ।
ताहेच्चिअ रिउलोओ पइट्ठओ गिरिगुहागब्भं ॥ १०६ ॥
[ यदैव तव चापो निःसृतो निजनिचोलगर्भात् ।
तदैव रिपुलोकः प्रविष्टो गिरिगुहागर्भम् ॥ ]

अत्र चापनिस्सरणस्य कारणस्य रिपुलोकप्रवेशात्मन. कार्यस्य च तुल्यकालतोपनिबन्धनाद्वक्ष्यमाणलक्षणयाऽसङ्गत्या सह सङ्करः । यथा च—

ज्यायान्धन्वी नवधृतधनुस्ताम्रहस्तोदरेण
क्षत्रक्षोदव्यतिकरपटुस्ताटकाताडनेन ।
कर्णाभ्यर्णस्फुरितपलितः क्षीरकण्ठेन सार्कं
योद्धुं वाञ्छन्न कथममुना लज्जते जामदग्न्यः ॥ १०७ ॥

अत्र जामदग्न्यदाशरथ्योः प्रौढाप्रौढत्वेन विरूपयोः संघटनेति विषमालंकारगर्भता । न चायं वैधर्म्यदृष्टान्तः प्रकृतार्थविलक्षणाप्रकृतोपनिबन्ध औपम्यपर्यवसायित्वे च तस्य भावात् । इह च द्वयोरपि तुल्यत्वादौपम्याभावाच्च ॥ २५ ॥

## आरोपो रूपकम् ॥ २६ ॥

भिन्नयोः सामानाधिकरण्यनिर्देश आरोपः । न त्वन्यत्रान्यारोप आरोपः । न ह्यर्थेऽर्थान्तरं वस्तुत आरोप्यते । नापि प्रतीतितः । न ह्यनुन्मत्तेन मुखं चन्द्र इत्यादौ शुक्तिकाया इव रजतेन मुखस्य चन्द्रेणाच्छादितत्वं प्रतीयते । मुखस्य पृथगुपात्तस्य स्वरूपेणैव भासमानात् । नापि द्विचन्द्रादिवद्बाध्यमानैव प्रतीतिः । बाधोत्पत्तावपि तत्र तस्या अनिवृत्तेः । इह त्ववगतचन्द्रविविक्तमुखस्वरूपस्यानिश्चितशुक्तिरूपस्यैव प्रमातुश्चन्द्रोयं रजतमितिवच्छतशोऽप्युच्यमाने न तद्रूपतया प्रतिपत्तिः । किन्तु नीलमुत्पलमित्यादिवत्सामानाधिकरण्यदर्शनात्प्रतिपादनभ्रमोऽयं न भ्रान्ता प्रतिपत्तिः । द्विचन्द्रादिवद् बाध्यमानाया अपि तस्या अभावात् । नापि शब्दे शब्दान्तरारोपः । मुखादेश्चन्द्रशब्दादिरूपतयाऽप्रतीतेः । अन्योन्यविविक्तस्वविश्रान्तरूपो(प)लम्भात् । तस्मात्तद्धर्मत्वादिप्रतिपत्त्यर्थः सामानाधिकरण्यनिर्देश एवारोपः । इहान्ये सादृश्यनिमित्त एवारोपो रूपकं न सम्बन्धान्तरनिमित्तकोऽपि, तेन सम्बन्धान्तरपूर्वक आरोपो वैचित्र्यमात्रं न त्वलङ्कारः कश्चिदिति मन्यन्ते । यत्पठन्ति च "उपमैव तिरोभूतभेदा रूपकमिष्यत" इत्यादि । तत्र( न )यनिपुणहृदयावर्जकम् । तथा हि इह द्विविधा लक्षणा । प्रयोजनरहिता रूढा । तद्युता च कार्या । तत्र रूढायां प्रयोजनरूपव्यङ्ग्यार्थाभावादभिधावद् वैचित्र्यचारुताविरहान्न सहृदयहृदयाह्लादकारितया रसपरिपोषकत्वमिति नालंकारता । कार्या पुनस्तद्वैलक्ष्यण्येन काव्यजीवितायमाना सर्वथा कविभिरादरणीयेति सर्वेषां ध्वनिकारादीनामविप्र(ति)पत्तिः । न च तस्याः सादृश्ये सम्बन्धान्तरे

वा कश्चिद्विशेषः येनैकत्रालङ्कारतापरत्र तद्भाव इति स्यात्। न च सम्बन्धान्तरनिमित्त आरोपोऽलङ्कारतया लक्षित। नापि तद्युच्यते। रूपकसाजात्येन तदन्तर्भावस्यैवोचितत्वात्। अत एव आरोपो रूपकमिति सामर्थ्येनैवेह (सामान्येनैव) सूत्रितम्। न च सादृश्यमित्यनुपक्तम्।

साहश्यसम्बन्धनिबन्धनाया अलंकृतित्वं यदि लक्षणायाः।
साम्येऽपि सर्वस्य परस्य हेतोः सम्बन्धभेदेऽपि तथैव युक्तम्॥

इति सग्रहः।

सो णत्थि एत्थ गामे जो एअं महमहन्तलाअण्णं।
तरुणाणं हिअअलूडिं परिसक्कन्तिं णिवारेइ॥ १०८॥
[स नास्तीह ग्रामे य एनां महामहनीयलावण्याम्।
तरुणानां हृदयलुण्ठाकीं परिष्वक्कन्तीं निवारयति॥]

"द्विर्भाव स्मरकार्मुकस्य" चेत्यादौ साहश्यसम्बन्धाभावेऽपि भवद्भी रूपकमुक्तम्। न ह्यत्र तरुण्या हृदयलुण्ठ्या प्रतिपदिन्दोर्वा द्विर्भावेन सह साहश्यमस्ति। तस्मादारोपमात्रं रूपक स्थितमिति। तच्च परस्परसापेक्षानेकारोपात्मक सावयव शब्दोपात्तसमस्तारोप्यमाणार्थं समस्तवस्तुविषयं क्वचित्तथा। क्वचिच्चार्थावसेयारोपमेकदेशविवर्ति चेति द्विभेदम्। आरोपान्तरनिरपेक्षं निरवयवं तदपि केवलमेकविषयानेकारोपात्मक मालारूपकं चेति द्विविधम्। एकस्यैवान्यारोपसापेक्षत्वे परम्परितम्। तच्च केवलं मालारूपं चेति द्विभेदमेव। अस्य सावयवस्य च क्वचिच्छ्लेषमूलत्वमपि। एते च सावयवत्वादिना भेदा उपमायास्तद्धर्मेषु चालंकारान्तरेषु यथायोगमभ्यूह्याः।

तृण कान्ता विरक्तस्य तृणं शूरस्य जीवितम्।
तत्त्वज्ञस्य तृणं शास्त्रं निस्पृहस्य तृणं तपः॥ १०९॥

इत्यादावनेकस्मिन् विषय एक आरोप इति संभवन्नपि भेदो वैचित्र्याभावान्न गणित। तथा हीह रूपके विषयस्योत्कर्षार्थं आरोप। स च बहुधा क्रियमाण प्रकर्षाय पर्यवस्यति। यदा त्वनेकस्मिन् विषये एकरूप आरोपः तदा न तावदेकैकस्य विषयस्य विषयान्तरेणारोपनिमित्तोऽतिशयः कश्चित्प्रती-

यते। नापि युज्यते। परस्परनिरपेक्षत्वात्सर्वेषाम्। यदि चारोपनिमित्त आरोप्यमाणस्योत्कर्षः कश्चित्स्यात्तदा विषयबहुत्वे तस्य प्रकर्षो भवेन्न त्वेवम्। तेन न किञ्चित् वैचित्र्यमिति स्थितम्। शाब्दश्चायम्। यत्र श्रौतं सामानाधिकरण्यम्। आर्थस्त्वर्थावसेयसामाधिकरण्यः। तत्रापि सादृश्येनोक्तन्यायेन सम्बन्धान्तरेण वा भवतीत्युक्तवक्ष्यमाणभेदभिन्नत्वात्प्रचुरतरो भेदः। दिङ्मात्रं यथा—

ततः पपात जलधौ विरोचनफणामणिः।
दिनाहेर्नीयमानस्य बलात् कालगरुत्मता ॥ ११० ॥

अत्र विरोचनस्य फणामणिरूपणं दिनादीनामहिप्रभृतिरूपणमिति चान्योन्यसापेक्षत्वम्। सर्वत्र चारोप्यमाणानां शाब्दत्वात्सावयवं समस्तवस्तुविषयम्।

देव स्वैरं रजनिरमणी दत्तनेत्रोत्सवेन
स्थित्वा सार्धं सुचिरममुना वल्लभेनौषधीनाम्।
एतां ताराकुसुमशबले व्योमतल्पे विकीर्णां
संप्रत्येषा तिमिरकबरीमायतां संवृणोति ॥ १११ ॥

अत्र रजन्यादे रमणीत्यादिना रूपणं शब्दोपात्तम्। ओषधीवल्लभस्य रमणत्वमर्थात्प्रतीयत इत्येकदेशविवर्ति। श्लिष्टत्वे यथा—

भवमरुमार्गभ्रमणश्रान्तस्य शिव प्रसीद दीनस्य।
त्वन्मानसे प्रसन्ने शाम्यति तीव्रापि मे तृष्णा ॥ ११२ ॥

निरवयवं यथा—

गायन्तं च रुदन्तं शान्तं क्रुद्धं क्षणे हसन्तं च।
रक्ष विभो मामार्तं गृहीतमाशापिशाचिकया ॥ ११३ ॥

अत्राशायां पिशाचिकारोपणमारोपान्तरनिरपेक्षत्वान्निरवयवम्। मालया यथा—

वनान्तदेवतावेण्यः पान्थस्त्रीकालशृङ्खलाः।
मारप्रवीरासिलता भृङ्गमालाश्चकाशिरे ॥ ११४ ॥

पायात्स वः कुमुदकुन्दमृणालगौरः
शङ्खो हरेः करतलाम्बरपूर्णचन्द्रः ।
नादेन यस्य सुरवैरिविलासिनीनां
काञ्च्यो भवन्ति शिथिला जघनस्थलीषु ॥ ११५ ॥

अत्र शङ्खस्य पूर्णचन्द्रारोपः करतलस्याम्बरारोपे हेतुरिति परम्परितम् । मालया यथा—

उषाप्रवालद्रुमयष्टिपल्लवास्त्रिलोकहर्म्याङ्गनहस्तदीपिकाः ।
दिनद्विपेन्द्रारुणकर्णचामरा मरीचयोऽर्कस्य लुठन्ति कोमलाः॥११६॥

श्लिष्टं यथा—

शूरोद्रेकदिनावतारमतनुस्थैर्याद्रिपुष्पाकरं
राजाक्रान्तिविधुंतुदं कुवलयप्रोल्लासचन्द्रोदयम् ।
बाणप्रेरणमाधवं बहुलतासंसर्गलीलावनं
दृष्ट्वा त्वत्कटकं नरेन्द्र भजते मान्द्यं स सङ्क्रन्दनः ॥ ११७ ॥

एतच्च परम्परितं सावयवं चारोपान्तरं प्रत्यानुकूल्येनारोपस्य । क्वचित्तु प्रातिकूल्येनापि भवति यथोदाहृतं मध्ये "राजाक्रान्तिविधुन्तुद"मित्यत्र । यथा च—

सौजन्याम्बुमरुस्थली सुचरितालेख्यद्युभित्तिर्गुण–
ज्योत्स्नाकृष्णचतुर्दशी सरलतायोगश्वपुच्छच्छटा ।
यैरेषापि दुराशया कलियुगे राजावली सेव्यते
तेषां शूलिनि भक्तिमात्रसुलभे सेवा कियत्कौशलम् ॥११८॥

अत्र सौजन्यस्याम्बुत्वेन रूपणे कृतेऽम्बुप्रतिकूलमरुस्थलीत्वारोपो राजावल्यामिति प्रतिकूलत्वमारोपयोः । यथा च—

ववसाअरइपओसु रोसगइन्दस्स संखलाबंधु ।
कहमवि दासरहीहं जअकेसरिपंजरो गओ(घण)समओ ॥ ११९ ॥

माणदुमपरुसपवनस्स सामि सव्वाङ्गणिव्वइअरस्स
अवगूहणस्स भद्दं रअनाडअं पुव्वरङ्गस्य ॥ १२० ॥
[ व्यवसायरविप्रदोषो रोषगजेन्द्रस्य शृङ्खलाबन्धः ।
कथमपि दाशरथेर्जयकेसरिपंजरो गतो घनसमयः ॥
मानद्रुमपरुषपवनस्य सखि सर्वांगनिर्वृतिकरस्य ।
अवगूहनस्य भद्रं रतनाटकं पूर्वरङ्गस्य ॥ ]

पूर्वत्र घनसमयस्य मलिनत्वात्प्रदोषादिरूपणा रूपणान्तरहेतुरिति परम्परितम् । उत्तरत्र द्रुमरूपणानुकूलः पुरुषपवनारोपः । मानस्य च द्रुमत्वं तावत्तयालिङ्गनस्य परुषपवनत्वं, आलिङ्गनस्य च परुषपवनत्वं यावन्न तावन्न मानस्य द्रुमत्वमिति एकस्यापि प्रथमसिद्धत्वाभावे परस्परसापेक्षत्वात्सावयवम् । रतनाटकेऽस्यत्रानुकूल्येनैव सावयवत्वम् । एकैकस्य पूर्वसिद्धत्वसंभवे सत्येकरूपकाङ्गत्वे सावयवमेव । यथा "हासज्योत्स्ना वदनशशिन" इत्यादि । एतेषूदाहरणेषु सादृश्यहेतुक आरोपः । सम्बन्धान्तरेण यथा—

उल्लासो लतिकानामकालमूर्च्छा वियोगिवर्गस्य ।
प्रभवति दक्षिणवायुर्बाहुजयो मदनमल्लस्य ॥ १२१ ॥

अत्र दक्षिणवायुरूपे कारणे कार्यरूपं लतिकोल्लासादिसामानाधिकरण्येनारोपितमिति सादृश्यव्यतिरिक्तः सम्बन्धः । वैपरीत्येन यथा—

वेदैश्वर्यमकिञ्चनत्वमसमो भोगोऽल्पभिक्षाशनं
पूर्णत्वं कृशिमात्रतेन परमाकल्पो गुरुर्गोणिका ।
शूरत्वं रिपुषु क्षमा परिजनः कैवल्यमिच्छोन्नतिः
सर्वाशाहतिरेव यत्र तमहं सेवे सुखेनाश्रमम् ॥ १२२ ॥

अत्र विषयविषयिणोर्वैपरीत्यं सम्बन्धः । न च वाच्यम् अत्रापि वेदैश्वर्यादेः कार्यं निरपेक्षत्वादिकमाकिञ्चन्यादिना क्रियत इत्येककार्यकारित्वादिना विषयविषयिणोर्मुखं चन्द्र इत्यादिवत्साधर्म्यमेवेति । मुखं चन्द्र इत्यादौ साधर्म्यप्रतीतिनिमित्तो ह्यारोपः । इह त्वप्रतिपन्नसाधर्म्ययोर्विरोधात्कष्टकल्पनया साधर्म्यावगमः । एतेषु सामानाधिकरण्यस्य शाब्दत्वाच्छाब्दं रूपकम् । आर्थं यथा—

याताः कणादतां केचिदपरे विन्ध्यवासिताम् ।
शवरस्वामितामन्ये शास्त्रकारास्तवारयः ॥ १२३ ॥

अत्रारयः शास्त्रकारा इति सामान्येन शास्त्रकारित्वं सामानाधिकरण्येनारोपितम् । याताः कणादतामित्यादौ तु रिपवः कणाद इति साक्षादनभिधानेऽपि कणाद इति शास्त्रकारविशेषणविशेष्यत्वं रिपूणामर्थात्प्रतीयते । अत्र च कणादत्वमन्यस्य धर्मः कथमन्येन प्राप्यत इति किं निदर्शना किं वारयः कणादा इति रूपकं इति न संदेहसंकरः । शास्त्रकारास्तवारय इत्यस्य रूपकस्य रूपकान्तरसाधकत्वात् । एतानि पदार्थस्य पदार्थान्तर आरोपात्पदार्थरूपकाणि । वाक्यार्थरूपकं यथा—

वाचालतैषा पुरतः कवीनां कान्त्या मदोऽयं सविधे हिमांशोः ।
तत्सन्निधौ पाटवनाटनं यत्तथापि भक्त्या किमपि ब्रवीमि ॥१२४॥

अत्र यच्छब्देन परामृष्टे वाक्यार्थ एषेत्यादिना सामानाधिकरण्येन वाक्यार्थान्तरारोप इति शाब्दं वाक्यार्थरूपकम् । सम्बन्धान्तरेण यथा—

स्नानसक्तपरिवारसुन्दरी वृन्दमध्यमवधीरिताङ्कुशः ।
यज्जगाम मदलङ्घितः करी भाग्यसम्पदुपरिस्थितस्य सा ॥१२५॥

अत्र सुन्दरीवृन्दमध्यगमनरूपे कार्ये भाग्यसम्पत्कारणरूपा यस्येति सामानाधिकरण्येनारोपिता ।

अरण्यरुदितं कृतं शवशरीरमुद्वर्तितं
स्थलेऽब्जमवरोपितं सुचिरमूषरे वर्षितम् ।
श्वपुच्छमवनामितं बधिरकर्णजापः कृतः
कृतान्धमुखमण्डना यदबुधो जनः सेवितः ॥ १२६ ॥

इत्यादौ सामर्थ्यलभ्यस्य तच्छब्दस्य यच्छब्देन सामानाधिकरण्याच्छाब्दं मालावाक्यार्थरूपकम् । आर्थं वाक्यार्थरूपकं यथा—

स वक्तुमखिलाञ्शक्तो हयग्रीवाश्रितान् गुणान् ।
योऽम्बुकुम्भैः परिच्छेदं कर्तुं शक्तो महोदधेः ॥ १२७ ॥

यच्च हयग्रीवगुणवर्णनं तत् समुद्राम्बुकुम्भपरिच्छेद इति प्रतीतेः वाक्यार्थरूपकस्यार्थत्वम्। माला यथा "कः कृष्णसर्प"मित्यादौ। एवमन्यदन्वेष्यम्॥ २६॥

## नियतधर्महानावारोप्यमाणस्यातिसाम्यमभेदः ॥ २७ ॥

आरोप्यमाणस्य धर्मो गुणक्रियादिः। तस्य नियतस्य निषेधे परिशिष्टसमस्तधर्मान्तरसद्भावाभ्यनुज्ञाने विषयस्य तेन सहातिसाम्यप्रतिपादनं विषयविषयिणोर्भेदाभावादभेदोऽलङ्कारः। अत्र शाब्दत्वार्थत्वभेदाद् द्वैधम्। शाब्दो यथा—

वनेचराणां वनितासखानां दरीगृहोत्सङ्गनिषक्तभासः।
भवन्ति यत्रौषधयो रजन्यामतैलपूराः सुरतप्रदीपाः॥ १२८॥
कु. १.१०

अत्रौषधयः सुरतप्रदीपा इति श्रौतं सामानाधिकरण्यम्। तैलपूरणमात्रविरहादोषधीप्रदीपानां प्रदीपान्तराद् भेद इत्युक्तेऽर्थात्सर्वतोऽभेद इत्यवगम्यते। अत एव चाधिरोपितवैशिष्ट्यं रूपकमेवेति रूपक एवास्यान्तर्भाव इति न वाच्यम्। अभेदमात्रप्रतीतौ रूपकं, नियतधर्महानावन्यतः सर्वतोऽभेदप्रतीतौ अभेद इति प्रतीतिभेदात्। परिणामादे रूपकान्तर्भावापत्तेश्च। परिणामादिवदेव प्रतीतिभेदेन रूपकाद्भिन्नः साम्याद्दढादभेदः? ( साम्यदार्ढ्यमभेदः )। क्वचिदध्यवसायमिश्रत्वादित्युपस्कारः। यत्पुनरुक्तम्—ओषधयः सुरतप्रदीपा इत्यत्रोत्तरकालभाव्यतैलपूरा इति विशेषणमोषधीनामिति रूपकमेव पूर्वसिद्धत्वादिति तन्न साधु। न ह्यत्र वाक्यभेदो येनादावारोपपर्यवसिते पश्चाद्विशेषणविशेष्यभाव इति स्यात्। नाप्योषधीनां विशेषणम्। तासामतैलपूरत्वाव्यभिचारात्। व्यभिचारिणश्च विशेषणत्वात्। रूपके चारोप्यमाणस्य प्राधान्याद्विषयस्य स्वरूपानवस्थानाद्विशेषणमयुक्तमेव। न हि "शशिना वदनेनेदं युवत्या निहतं तम" इत्यादौ वदनादीनां "विलोलनेत्रमित्रेणे"त्यादि विशेषणं सुघटम्। तत्स्थितमेतत् उक्तरीत्या रूपकादस्य भेद इति। आर्थो यथा—

दृढतरनिबद्धमुष्टेः कोशनिषण्णस्य सहजमलिनस्य।
कृपणस्य कृपाणस्य च केवलमाकारतो भेदः॥ १२९॥

अत्र कृपणस्य कृपाणस्य चैकविभक्तिनिर्देशेऽपि न सामानाधिकरण्यम्। भेदप्रतिपादकेन चकारेण समुच्चीयमानत्वात्। आरोपे चाभेदस्य विवक्षितत्वात्। यथा च वदनं जलजं चेत्यादौ प्रयोगे न कस्यचिदारोपप्रतीतिः। तेन न शाब्द आरोपः। किन्त्वाकारमात्रेण भेदे धर्मान्तरैरभेद एवेत्यर्थपर्यालोचनयार्थभेद (आर्थाभेदः)। "अकरो हस्ती" "मयाहं रामश्च"मित्यादावारोप्य(पा)भावेऽप्यय भवतीत्यध्यवसेयम्॥ २७ ॥

## प्रकृतोपयोगित्वे परिणामः ॥ २८ ॥

आरोप्यमाणस्येत्यनुषङ्ग । आरोप्यमाणस्य यथाऽसम्भव उचितो न तथारोपविषयस्येति प्रकृते प्रस्ताव उपयोगित्वाद्विषयिरूपस्याप्रकृतस्य यत्कार्यं तत्प्रकृतेनारोपविषयेण वस्तुतः संपाद्यते न प्रतीतिमात्रेणेति प्रकृतमप्रकृतरूपतया परिणमतीति परिणामालंकारः। प्रमाणान्तरेणातिविविक्तत्वेनावगतत्वाद्विषयविषयिणोरेकरूपतया प्रतिपादनेऽपि प्रस्खलद्रूपत्वेनामुखेपि न तथा प्रतिपत्तिरित्येवरूपाद्रूपकादस्य भेदो विषयस्य तत्त्वतो विषयिकार्यकारित्वादिना तद्रूपत्वेन प्रतीतेः स्फुट एव। यथोक्तं प्रतीतिभेद प्रकृतोपयोगित्वं चानवगच्छता " यद्वजनिपुरन्ध्रिशिरोभ्रतिलक " इत्यादौ रूपके " अत्रान्तरे सरस्वत्यवतारणवार्तामिव कथयितुमवततार मध्यमं लोकमंशुमाली "त्यादावुत्प्रेक्षाद्यलंकारान्तरेऽपि प्रकृतोपयोगित्वमस्तीति न परिणामस्यालंकारान्तरत्वमिति केनचिदुक्त तदपसारितम्। यथोक्तस्य प्रकृतोपयोगित्वस्याभावात्। न हि रजनीपुरन्ध्रीत्यादि रूपकान्तरानुगुण्यमात्र प्रस्तावौचित्यमात्रं वा प्रकृतोपयोगित्वम्। तदेतद्वैलक्षण्येनोदाहरिष्यमाणत्वात्।

प्रकृतार्थानुगुणत्वं नेष्टा प्रकृतोपयोगिता साहि।
सर्वत्र रूपकेऽस्मिन्साक्षात्तत्कार्यकारिता किन्तु ॥ इति सक्षेपः।

अय च रूपकवच्छाब्द आर्थश्च। क्रमेणोदाहरणम्।

यत्रांशुकाक्षेपविलज्जितानां यदृच्छया किंपुरुषाङ्गनानाम्।
दरीगृहद्वारविलम्बिबिम्बास्तिरस्करिण्यो जलदा भवन्ति॥१३०॥

कु. १.१४

अत्र जलदानां वस्तुतस्तिरस्करिणीकार्यवल्लभादर्शनादिकारितया तद्रूपतया परिणामः। एवमुत्तरत्र बोद्धव्यम्।

मुक्ताकलापैरपशुक्तिमुक्तैरपुष्पगुम्फैरपि कर्णपूरैः ।
राज्ञा स वाग्मी प्रथमं वचोभिरकृत्रिमं ढौकनकं चकार॥१३१॥

अत्र वचोभिर्ढौकनकमित्यार्थ आक्षेपः। अत्र वनेचराणामित्यादावभेदेन सह सङ्करः। अत्र च विषयिणोऽप्युपादान्न समासोक्तिवद् व्यवहारसमारोपः। अत्र तु (रूप)समारोपोऽपि। न च समासोक्तेरस्य विषय्युपादानमात्रेण भेदः। तथात्वे समासोक्त्युदाहरणे विषयिण उपादाने परिणामालंकार एव स्यान्न रूपकम्। तथा समासोक्तौ स्वयमेवोक्तं रूपक(रूप)समारोपि रूपकमेव स्यादित्यादि। अत एव रूपकसाजात्यात् समासोक्तेर्न तस्यामारोप्यमाणस्य प्रकृतोपयोगित्वम्। तस्माद्रूपकाद्विषय्युपादानमात्रं समासोक्तेर्भेदः। तदुपादाने तु रूपकमेव ॥ २८ ॥

## विषयस्य मुख्यस्य वापह्नवे अन्यविधिरपह्नुतिः ॥ २९ ॥

आरोपविषयस्य निषेधे विषयिणो विधानमेका। मुख्यस्य चन्द्रादेरन्यस्य मुखचन्द्रादेर्गौणस्य विधिरपराऽपह्नुतिः। "कान्तिच्छटाच्छुरितदिग्वलयं न वक्त्रं कुत्रापि संभवति जातु ततः किमेतत्" इत्यादौ विषयनिषेधेऽपि विषयिविधानाभावान्नापह्नुतिः। अतः सूत्रेऽन्यविधिरिति कृतम्। यत्र साक्षान्नञादिना निषेधार्थेन विषयापह्नवस्तत्र शाब्दः। यत्र च्छलादिशब्दप्रयोगे सति प्रकरणादिवशान्निषेधप्रतीतिस्तत्रार्थोऽपह्नवः। न हि नञादिवच्छलादिशब्दा निषेधवाचकाः किन्तु व्याजाद्यर्थाः। अन्यथा "फलं निरस्य भृत्येन व्यवहारान्नयेन्नृप" इत्यादावपि निषेधप्रत्ययप्रसङ्गः। एवं "अस्याः सर्गविधौ" इत्यादिवक्ष्यमाणसन्देहोदाहरणे कथं शब्दस्य प्रकारादिवाचित्वेऽपि पुराणस्य प्रजापतेर्वेदाभ्यासजडत्वादिना तन्वीनिर्माणशक्तत्वपर्यालोचनया निषेधपर्यवसानादार्थ एवापह्नवः। न तु

अमुष्मिँल्लावण्यामृतसरसि नूनं मृगदृशः
स्मरः शर्वप्लुष्टः पृथुजघनभागे निपतितः।
यदङ्गाङ्गाराणां प्रशमपिशुना नाभिकुहरे
शिखा धूमस्येयं परिणमति रोमावलिवपुः ॥ १३२ ॥

इत्यादौ वपुश्शब्दमुखेन निषेधप्रतीतेरार्थोऽपह्नव इति वाच्यम् । वपुरादिशब्दतुल्यार्थमयत्वादिप्रयोगस् "तस्मै सौमित्रिमैत्रीमयमुपहृतवानातु(?)रं नाविकाये"त्यादौ अपह्नवप्राप्तौ परिणामादावपि चापह्नुतिप्रसङ्गात् । तेनात्र रूपकं निदर्शना वा । रूपकं च भिन्नरूपतया प्रसिद्धयोः सामानाधिकरण्यायोगे एकतरस्य निषेधप्राप्तावर्थादारोपविषयस्य पर्यवसानिकः प्रतीयमानो निषेधोऽभ्युपगन्तव्यः । आरोप्यमाणस्य निषेधे आरोपवैयर्थ्यप्रसङ्गात् । तत्प्रतीयमाननिषेधनिमित्त एवमादावपह्नवभ्रमः । न च निषेधस्य शाब्दत्वार्थत्वकृत एवापह्नुतिरूपकयोर्भेदः । अपि त्वस्यां निषेधगर्भत्वादारोपस्याध्यवसायतुल्यत्वम् । तत्र चारोपे पर्यवसिते तन्निमित्तो निषेध इति प्रतीतोऽपि ॥ उदा०—

अवाप्तः प्रागल्भ्यं परिणतरुचः शैलतनये
कलङ्को नैवायं विलसति शशाङ्कस्य वपुषि ।
अमुष्येयं मन्ये विगलदमृतस्यन्दशिशिरे
रतिश्रान्ता शेते रजनिरमणी गाढमुरसि ॥ १३३ ॥

सोहइ चलमउलिकुसुमो भमन्तभसलच्छलेन अप्पाणं ।
महुमयणदंसणविलीअमाणदुरिअं पआसेन्तो ॥ १३४ ॥
[ शोभते चलमौलिकुसुमो भ्रमन्भ्रमरच्छलेनात्मानं ।
मधुमथनदर्शनविलीयमानदुरितं प्रकाशयन् ॥ ]

पूर्वत्र श्रौतो निषेध । स्वुत्तरत्र पुनश्छलशब्दार्थपर्यालोचनयार्थात् प्रतीयते । एते साधर्म्योदाहरणे । सम्बन्धान्तरनिमित्तो यथा—

उल्लोल्लकरअरअणक्खएहिं तुह लोअणेसु मह दिण्णं ।
रत्तंसुअप्पसाअं कोवेण पुणो इमे ण अक्कमिआ ॥ १३५ ॥
[ आर्द्रार्द्रकरजरदनक्षतैस्तव लोचनयोर्मम दत्तः ।
रक्तांशुकप्रसादः कोपेन पुनरिमे नाक्रान्ते ॥ ]

अत्र लोचनरक्तत्वकारणभूतस्य कोपस्य निषेधे रक्तांशुकप्रसादात्मकस्य कारणान्तरस्यारोप. । न चात्र कोपस्य रक्तांशुकेन सह साधर्म्यम् । आर्थो निषेधा यथा—

विहलङ्खलं तु तं सहि दट्ठूण कुडेण तरलतरदिट्ठिं।
वारप्फंसमिसेणअ अप्पा गुरुओत्ति पाडिअ विभिण्णो ॥१३६॥
[ विशृङ्खलां त्वां सखि दृष्ट्वा कुम्भेन तरलतरदृष्टिम्।
द्वारस्पर्शमिषेण आत्मा गुरुक इति पातयित्वा विभिन्नः ॥ ]

अत्र घटभङ्गस्य द्वारस्पर्शाख्यं कारणान्तरं प्रतिषिध्य युवतिविषयदाक्षिण्यरूपं हेत्वन्तरमारोपितम्। अत्रैककार्यत्वं सम्बन्धान्तरं कार्यकारणभावादिना यथा।

हेलोदञ्चन्मलयपवनाडम्बरेणाहतासु[1]
प्रेङ्खाकेलि किमपि भजतां चूतशाखाशिखासु[2]।
वाचालत्वं न यदुदभवत्कानने कोकिलानां
मौनित्वं तत्पथिकहरिणीलोचनानां ववल्ग ॥ १३७ ॥

अत्र कोकिलवाचालत्वस्य कारणस्य निषेधे पथिकस्त्रीमौनित्वस्य कार्यस्य विधिः। अत्रैव वाचालत्वमौनित्वयोर्विषयविषयिणोर्वैपरीत्यमपि सम्बन्धः। एतानि प्रकृतनिषेधोदाहरणानि। अप्रकृतनिषेधे यथा—

शनैः शतपथश्रुतिश्रवण( जात )पुण्यस्पृहा
गलद्भ्रमणसम्भ्रमा भ्रमति यत्र मन्दाकिनी।
चिरेण बुधमण्डलप्रथममङ्गमभ्यागतै—
र्विलम्बितगतिर्मनागतिपुरं जनैर्गीयते ॥ १३८ ॥

अत्रान्यदेशवैलक्षण्येन स्वभावत एव वाराणस्यां मंदाकिन्या वेगपरिहारेण गमने स्वागतकारणादिरारोपितत्वेनाप्रकृतस्य हेतोरार्थेऽपह्नवे शतपथश्रवणस्पृहादिरप्रकृत एवारोपितः। द्वितीया यथा—

न विषं विषमित्याहुर्ब्रह्मस्वं विषमुच्यते।
विषमेकाकिनं हन्ति ब्रह्मस्वं तु ससन्ततिम् ॥ १३९ ॥

अत्र मुख्यस्य विषस्य निषेधे गौणस्य ब्रह्मस्वविषस्य विधानम्। आर्थेऽपह्नवे यथा—

---

१. °कुलासु। २. लतासु।

जोव्वणवुड्ढी कमला लहह्जणपरिअओ प्पिआ रत्ता।
णवमधुसमओ एसो सग्गो अक्खाणिआ अण्णा॥ १४० ॥
[ यौवनवृद्धिः कमला विदग्धजनपरिचयः प्रिया रक्ता।
नवमधुसमयः एष स्वर्ग आख्यानिका अन्या॥ ]

अत्र मुख्यस्य निषेधे स्वर्गान्तरविधानम्। न च निषेधे विषमित्यादावधिकगुणस्यानादरात्प्रतीप, मुख्यस्याप्रकृतस्य विषादेर्निषेधेऽन्यस्य प्रकृतस्यैव विधानात्। तत्र च प्रकृतस्यवाहतत्व न प्रकृतान्तरस्य। निषेधाद्यभावाच्च नापि विषस्य विषान्तरादाधिक्ये सजातीयव्यतिरेक.। तत्रान्यनिषेधाभावात्। अत एव नाभेदः। अतिसाम्येऽप्युपमाननिषेधात्। एवं च नोपमेयस्यैव निषेधेऽपह्नुति.। क्वचिदुपमानादेरपि निषेधात्, नापि प्रकृतस्यैवाप्रकृतनिषेधेऽप्युदाहृतत्वात्। नापि भूम्यैवारोपितस्याप्यपह्नवदर्शनात्। तस्माद्यथोक्तमेवलक्षणमनवद्यम्॥ २९॥

## तस्यापि सन्दिह्यमानत्वे सन्देहः॥ ३०॥

विषयस्येत्येव। तच्छब्देनारोप्यमाणप्रत्यवमर्शः। कमलं वा वदनं वा इति वार्थसम्भिन्ना प्रतीतिः सन्देहः। स च यद्यपि समानधर्मानेकधर्मविप्रतिपत्त्युपलब्ध्यव्यवस्थात इत्यनेकधोक्तस्तथापि निमित्तान्तरोत्थापितस्य तस्य चारुत्वाभावात् समानधर्मानेकधर्मनिमित्तत्वेनेह द्विविध एव। सन्देहप्रतीतिविषयत्वे च सन्दिह्यमानत्व विषयविषयिणोर्विषयिणामेव वा सन्दिह्यमानत्वं सन्देह आरोपगर्भ प्रथम. परस्तु विषयोपादानानुपादा( ना )भ्यां द्विभेदः। उपादाने विषयस्यापह्नवतदभावाभ्या द्विधाप्यारोपगर्भ एव अनुपादाने अध्यवसायमूल। क्रमेण यथा—

किं पङ्कजं किमु सुधाकरबिम्बमेतत्
किं वा मुखं क्लमहरं मदिरेक्षणायाः।
यद् दृश्यते मधुकराभकुरङ्गकान्ति
नेत्रद्वयानुकृतिकार्ष्ण्यममुष्य मध्ये॥ १४१॥

अत्र क्लमहरत्वादि समानो धर्मः।

अस्याः सर्गविधौ प्रजापतिरभूच्चन्द्रो नु कान्तिप्रदः
शृङ्गारैकरसः स्वयं नु मदनो मासो नु पुष्पाकरः ।
वेदाभ्यासजडः कथं नु विषयव्यासक्त( व्यावृत्त )कौतूहलो
निर्मातुं प्रभवेन्मनोहरमिदं रूपं पुराणो मुनिः ॥ १४२ ॥

अत्र पुराणमुनेर्विषयस्यार्थोऽपह्नवः। तन्वीगतः कान्तिशृङ्गारप्रधानविलासवत्त्वं पुष्पसादृश्यलक्षणश्चानेकधर्मः। एवं चैवमादौ शब्दादिगतनिरवयत्वप्रयत्नान्तरीयकत्वाद्यनेकधर्मानुसन्धानवशोत्पन्ननित्यत्वानित्यत्वसन्देहवद्विप्रतिपत्तिं विना स्वयमेवानेकधर्मानुसन्धानेन संशयसङ्गादनेकादनेकस्माद्व्यावृत्तो धर्म इति व्याख्येयम्। अनेकस्माद् व्यावृत्तस्य विभागजत्वादेरछन्दस्वरूपवत्सन्देहहेतुत्वायोगाच्च। प्रायश्च मीमांसादावनेकधर्मनिमित्त एव प्रत्यधिकरणं सन्देहः।

चिरं चित्तोद्याने चरसि च मुखाब्जं पिबसि च
क्षणादेणाक्षीणां विरहविषवेगं हरसि च ।
नृप त्वं मानाद्रिं दलयसि च किं कौतुककरः
कुरङ्गः किं भृङ्गो मरकतमणिः किं किमशनिः ॥ १४३ ॥

अत्र च नृपरूपस्य विषयस्यापह्नवाभावः, उद्यानचरणमुखाब्जपानादिश्चानेको धर्मः।

किं तारुण्यतरोरियं रसभरोद्भिन्ना नवा मञ्जरी
लीलाप्रोच्छलितस्य किं लहरिका लावण्यवारांनिधेः ।
उद्गाढोत्कलिकावतां सुसमयोपन्यासविस्रम्भिणः
किं साक्षादुपदेशयष्टिरथवा देवस्य शृङ्गारिणः ॥ १४४ ॥

अत्र तन्वीलक्षणविषयानुपादाने विषयिणि मञ्जर्यादेरध्यवसायगर्भः सन्देहः। न च वाच्यमियमित्यनेन तन्वीनिर्देशादारोपगर्भ एवेति। विषयिभूतवल्लर्यादिपरामर्शकत्वादियं शब्दस्यान्यथा गौरेवायमित्यादावयंशब्दस्य विषयभूतवाहीकपरामर्शकत्वेऽध्यवसायास्तमयप्रसङ्गात्। स्थाणुर्वा पुरुषो वेति

न स्वारसिकः सन्देहोऽलंकारोऽपि तु कविप्रतिभोत्थापित.। तेन साधर्म्यं विहायापि निमित्तान्तरमवलम्ब्य कविप्रतिभोत्थापितः सन्देहोऽलंकार एव। एवं भ्रान्तिमदादौ ज्ञेयम्। उदा०—

देवि त्वच्चरणाम्बुजस्मृतिविधौ गाढावधानस्पृशां
धन्याना प्रसरन्ति सन्ततत्तया ये बाष्पधाराभराः।
किं ते स्युश्चिरकालभावितभवाप्रश्नक्रियावेगतः
किं वासादितमुक्तिचन्द्रवदनासन्दर्शनानन्दतः॥ १४५॥

अत्राश्रुधारारूपस्य कार्यस्य संसारवियोगो मुक्तिसांमुख्य चेति हेतुद्वयं सशयितम्।

इयं भुजङ्गी किमु सिद्धसुन्दरी सुरालयालंकरणं वधूरुत।
इति प्ररूढाकुलकल्पनामथो न संशयं निश्चयमश्नुते मम॥ १४६॥

इत्यादौ स्वारसिकसन्देहेनैवमन्यत्र ज्ञेयम्॥ ३०॥

सम्भावितसम्भाव्यमानापोहो वितर्कः॥ ३१॥

सामान्येन दृष्टे वस्तुनि आशङ्कितस्य आशङ्कमानस्य वा विशेषस्य बाधकेनोत्पुंसन[2] वितर्कः। अत एव बाधकसद्भावात्साधकबाधकप्रमाणाभावनिमित्तात्सन्देहादस्य भेदः। किं च तत्र सन्दिह्यमानानां वार्थसम्भिन्नैकप्रतीतिविषयीकृतत्वमिह पुनरनेकविकल्पेन सम्भावितस्य बाधकेनोत्पुंसितस्यापरविकल्पोदयसमयेऽनुसन्धानाभावाद् भिन्नप्रत्ययगोचरत्वम्।

अर्थद्वयोल्लेखवती मतिर्यासे संशयः केवलवस्तुनिष्ठा।
सम्भावनाबाधकबाधनीया यत्र स्फुटस्तत्र भवेद्वितर्कः॥

इति परिकरः॥ उदा०—

अयं मार्तण्डः किं स खलु तुरगैः सप्तभिरितः
कृशानुः किं सर्वाः प्रसरति दिशो नैष नियतम्।
कृतान्तः किं साक्षान्महिषवहनोऽसाविति तिरः(चिरं)
समालोक्याजौ त्वां विदधति विकल्पान् प्रतिभटाः॥ १४७॥

---

१. °वेशितः। २. बाधकोत्पुंसन। ३. ससशया।

अत्र मार्तण्डविकल्पस्य नियतसंख्याकनुरगाभावात्मकबाधकोत्पुंसितत्वे कृषानुविकल्पोत्पत्तौ किमयं मार्तण्डः किमयं कृपानुरिति प्रतीतिभावे सन्देहासम्भवादलंकारान्तरमेव। न च वाच्यमयमित्यस्य प्रकृतार्थपरामर्शकत्वात् किमयं किं मार्ताण्ड इति आरोपगर्भसन्देह एवेति। किमयमित्यत्र वाक्यार्थप्रतिपादकस्य किमः श्रवणाभावादयं मार्ताण्डः किमित्येतावतैव व्याख्यानावसरेणाकांक्षोप(श)मादध्याहारायोगाच्च उक्तेन न्यायेनाध्यवसायस्य चास्तमयप्रसंगात्। अपि च स्थाणुर्वा पुरुषो वेति सन्देहे चिरतरकालं चेष्टाद्यभावदर्शनेन पुरुषविकल्पस्य बाधे यथा न स्थाणौ तथा मार्ताण्डविकल्पस्य नियतसंख्याकतुरगाभावाद् बाधे अयमिति निर्दिष्टस्य राज्ञो निश्चितत्वे कथमिह कृशान्वादिविकल्पोदयमुखेन पुनः सन्देहः स्यात्। तस्मात् सन्देहव्यतिरिक्तवितर्क एवायम्। सम्भाव्यमानापोहो यथा। "गतं तिरश्चीनमनूरुसारथे"रित्यादि। अत्राशंक्यमानस्यैवानूरुसारथेर्गमनाभावान्निषेधे तथैव हविर्भुक्प्रभृतेरपोह इति पूर्वस्मात् भेदः[1]। यथा च—

प्राप्तश्रीरेष कस्माद् पुनरपि मयि तन्मन्थखेदं विदध्याद्
निद्रामप्यस्य पूर्वामनलसमनसो नैव सम्भावयामि।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातः
त्वय्यायाते विकल्पानिति दधत इवाभाति कम्पः पयोधेः ॥१४८॥

यथा च—

पयोधरभराटोपदर्शनं नास्य नूतनम्।
विलासहासहंसस्ते प्रवासरसिकः कुतः ॥ १४९ ॥

अत्र हंसस्य प्रवासे पयोधराटोपदर्शनं हेतुस्तस्य चात्र सर्वदावस्थानान्न नूतनत्वमित्यहेतुत्वे हेतु(त्व)स्य सम्भाव्यमानस्यापोहः। न चास्य द्विभेदस्य निश्चयाभावात् सन्देह एवान्तर्भाव इति वाच्यम्। उत्प्रेक्षाया अपि सम्भावनारूपत्वादनिश्चयात्मकत्वेन सन्देहान्तर्भावे पृथगनलंकारत्वप्रसंगात्। विच्छित्ति-

---

१. पूर्वस्मिन्नुदाहरणे आशङ्कितस्य बाधनेनोत्पुंसनमिहाशक्यमानस्येति पूर्वस्माद्भेद इति उक्तम्। (found in the margin).

भेदेन तस्यास्तथात्वे लक्षणानुसारवितर्कस्यापि विशेषोपपत्तौ पृथक्त्वमेव। यथा च नोत्प्रेक्षाया अध्यवसायपूर्वकत्वं तथाग्रे निवेदयिष्यते।

अनेकशोऽहं विमृशन्नपीत्थं खलं न वेद्मि स्थिरमस्थिरं वा।
सत्यं स्थिरश्चेत्क्षणसौख्यदः किमथास्थिरः किं युगदीर्घरोषः ॥१५०॥

इत्यत्र यद्यपि स्थिरत्वस्यास्थिरत्वस्योपमर्दस्तथापि न वितर्कः। स्थिरमस्थिरं वा न वेद्मीति उपक्रान्तसन्देहनिमित्ततयोत्तरार्धोपनिबन्धात्। तथा हि यत्र साधकबाधकप्रमाणाभावस्तत्र सन्देह। यत्र तु द्वयोरपि साधकं प्रमाणं यथोदाहृत"मस्या सर्गविधा"वित्यादि तत्रैकस्यापि त्यक्तुमशक्यत्वात्सन्देह एव। यत्र तु द्वयोरपि बाधकसद्भावस्तत्राप्येकस्यापि ग्रहीतुमशक्यत्वात्सन्देह एव यथेह। अत्र हि स्थिरत्वास्थिरत्वयोर्द्वयोरपि बाधितत्वाद्वक्ष्यमाणलक्षणव्याप्तिगर्भसन्देहो न वितर्क ॥ ३१ ॥

विपर्यित्वेन[1] सम्भावनमुत्प्रेक्षा ॥ ३२ ॥

विपयित्वेनार्थाद् विपयस्य मम्भावन[2] भवितव्यमनेन स्थाणुनेत्याद्यनिश्चयात्मकवितर्कादिशब्दाभिधेयसम्भावनाप्रत्ययविपयीकृतत्वमुत्प्रेक्षा। अतश्चानिश्चयात्मकतया सम्भावनायाः सन्देहमूलत्वं न त्वध्यवसायगर्भता। यत्रापि वक्ष्यमाणनीत्यांशेनाध्यवसायस्तत्रापि सन्देहानिवृत्ति.। तथाहि सन्देहनिश्चयरूपत्वेन प्रत्ययाना द्वैविध्यम्। निश्चयश्च यथार्थाव्यभिचारी सम्यक्प्रत्ययः। व्यभिचारी त्वसम्यक्। तत्र तावदुत्प्रेक्षा न मस्यक्त्वम्। अर्थाव्यभिचाराभावात्। नाप्यसम्यक्प्रत्ययरूपो विपर्यासः, तस्य निश्चयरूपत्वात्। अस्यां च शाब्देनापि वृत्तेन भ्रान्तिमदतिशयोक्त्यादिवद्विपयिणो निश्चयाभावात्। अनिश्चिते च सन्दिग्धमेवेत्यविवादः। अत एव नाध्यवसायमूलत्वमस्याः। तस्य विपयनिगरण विपयिनिश्चयश्च स्वरूपम्। न चात्रैकमपि सम्भवति विपयोपादानात्, निश्चयाभावाच्च। तेनाध्यव्यसाये व्यापारप्राधान्ये उत्प्रेक्षेति लक्षणमपर्यालोचिताभिधानमेव। न च—

एषा स्थली यत्र विचिन्वता त्वां भ्रष्टं मया नूपुरमेकमुर्व्याम्।
अदृश्यत त्वच्चरणारविन्दविश्लेषदुःखादिव बद्धमौनम् ॥ १५१ ॥

---

१ विपयत्वेन २. सम्भावितं.

इत्यादावशब्दत्वादेसौनित्वादिनाध्यवसितत्वान्निमित्तविषयोऽध्यवसाय[1] इति वाच्यम्। सर्वत्र निमित्तविषयेऽध्यवसायस्य सिद्धत्वेन साध्यत्वाभावान्निमित्तापेक्षया चाध्यवसायाङ्गीकारे उपमादीनामध्यवसाय एव लक्षणं स्यात्तेनारोपगर्भैवेयम्। क्वचित्तु विषयानुपादान आरोपगर्भत्वाभावान्निश्चयरूपांशभावेऽध्यवसायगर्भोत्प्रेक्षेति वाचोयुक्तिरुचितैव तद्धर्मसन्देहवत्। विषयनिगरणाख्यस्य मुख्यस्य तदंशस्य सिद्धत्वात्। सम्भावनायां च सम्भाव्यमानस्य दार्ढ्यादपरस्य च शैथिल्यादिह सम्भाव्यमानस्य विषयिणः शाब्देन वृत्तेन सत्यत्वं न त्वितरस्य। वस्तुतस्तु विषयिणस्सत्यतातिशयोक्तौ अपि नास्तीति तत्रापि विषयिणः सत्यतेति न वाच्यं स्यात्। अत एव सापह्नवायां विषयस्यैवासत्यत्वात् अपह्नवः अन्यथेतरस्यैव स्यात्। इयं च धर्मी वा धर्म्यन्तरत्वेनोत्प्रेक्ष्यते धर्मो वा धर्मान्तरत्वेनेति प्रथमं द्विभेदा। आद्या शाब्दत्वार्थत्वभेदादारोपस्य द्विविधैव। द्वितीयापि धर्मरूपविषयोपादाने आरोपगर्भा। अत्र च प्रधानभूतधर्म्युपसर्जनात्मकविशेषणीभूतानां धर्माणां परस्परं विशेष्यविशेषणभावानुपपत्तौ सामानाधिकरण्याभावादार्थ एवारोपः। अनुपादाने तु अध्यवसायगर्भा। आरोपगर्भे तु भेदत्रये विषयापह्नवानपह्नवाभ्यां द्वैविध्यम्। पुनरपि यथासम्भवं स्वरूपहेतुफलानामुत्प्रेक्षणेन निमित्तस्योपादानानुपादानाभ्यां बहुधा भिद्यते। इवाद्युपादाने वाच्या तदप्रयोगे त्वार्थी। सम्भविनोऽप्यन्यभेदा वैचित्र्यविशेषाभा(वा)न्नेह गणिताः। उदा०—

भुजप्रभादण्ड इवोर्ध्वगामी स पातु वः कंसरिपोः कृपाणः।
यः पाञ्चजन्यप्रतिबिम्बभङ्ग्या धाराम्भसः फेनमिव व्यनक्ति ॥१५२॥

अत्र पूर्वार्धे कृपाणरूपो धर्मी प्रभादण्डात्मकेन धर्म्यन्तरेण सामानाधिकरण्येन सम्भावितः। वैयधिकरण्येन यथा—

परिरम्भविसारित्थणआ भण कामेसुपडणसङ्काए।
रइकलहे जा पुरओ धरोन्ति फरफलअजुअलं व्व ॥ १५३ ॥

---

१. विषयो व्यवसाय.

[ परिरम्भविसारिस्तनभुजा कामेषुपतनशङ्कया।
रतिकलहे या पुरतः धारयति फरफलकयुगलमिव ॥ ]

अत्र योषिद्विशेषणत्वेनोपात्तयोः स्तनयोर्वैयधिकरण्योपात्तफरफलकत्वेन सम्भावनम्। एतयोः श्यामलत्वादिवर्तुलत्वादिकं चोत्प्रेक्षानिमित्तमनुपात्तम्।

क्व वर्तते मत्तनयेति भूमेरनुत्तरः प्रष्टुमिवोद्यतायाः।
स वारिदव्यूहनिवारितार्कप्रकाशमाकाशमवेक्षते स्म ॥ १५४ ॥

अत्राकाशाख्यधर्मिविशेषणभूतो धर्मो निवारितार्कप्रकाशरूपः तद्दर्शनहेतुरूपात्त एव द्रष्टृविशेषणेनानुत्तरत्वाख्येन हेत्वन्तरेण वैयधिककरण्यनिर्दिष्टेनोत्प्रेक्षित इति हेतूत्प्रेक्षा।

रविसंस्थितानां परिवर्तनाय पुरातनानामिव वाहनानाम्।
उत्पत्तिभूमौ तुरगोत्तमानां दिशि प्रतस्थे रविरुत्तरस्याम् ॥ १५५ ॥

अत्र मकरराशिसंक्रमणरूपमुत्तरादिक्प्रस्थाननिमित्तमनुपात्तम्। वाहनपरिवर्तनरूपेण फलभूतेन निमित्तान्तरेणाभेदेनाध्यवसितमित्यध्यवसायगर्भा फलोत्प्रेक्षा। अनयोश्चाकाशावलोकनमुत्तरदिग्गमनं चोत्प्रेक्षणे निमित्तमुपात्तमेव

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता ॥ १५६ ॥

अत्र तमोधर्मो व्यापनं तद्धर्मेणैव लेपनेनाभेदेनाध्यवसितमित्यध्यवसायमूला स्वरूपोत्प्रेक्षा। तिरोधायकत्वादि निमित्तमनुपात्तम्। न च वाच्यं तमसो लेपनकर्तृत्वेनोत्प्रेक्षणात्तमोरूपविषयोपादानादारोपमूलत्वमेवेति। अन्यदन्यत्वेन सम्भाव्यत इत्युत्प्रेक्षालक्षणम्। यदि च तमोगतत्वेन लेपनकर्तृत्वमुत्प्रेक्ष्यते न तदान्यदन्यत्वेनेति स्यात्। स्वरूपावस्थितस्य तमस आश्रयत्वेन विवक्षितत्वात्। तमसोऽन्यत्वेन सम्भावने हि तमो लेपनमेवेति प्रतीतिः स्यात्। अथवा चेदुदासीनस्य रूपस्य व्यापनाविष्टस्य लेपनाविष्टतया सम्भावनमित्युच्यते न तर्हि तमसो विषयत्वम्। व्यापनाविष्टत्वस्य तद्धर्मस्यैव धर्मान्तरत्वेनोत्प्रेक्षितत्वे विष(य)त्वोपपत्तेः। तस्य धर्मस्यानुपादानादध्यवसायगर्भत्वम्। ततश्च विषयभूततमोगतत्वेन लेपनकर्तृत्वमुत्प्रेक्षितम्। व्यापनं

त्प्रेक्षानिमित्तं न तु विषयोऽनुपादानात्। विषयानुपादाने चोत्प्रेक्षाया अभावादित्येतदुक्तेन न्यायेन सर्वमसमञ्जसमेव। अतश्चैवं यद् व्यापनादिधर्म एव विषयो न तु तमःप्रभृतिधर्मी येन विषयापह्नवेऽपह्नुतिरिति निजलक्षणानुसारेण विषयस्यापह्नवे सापह्नवोत्प्रेक्षायां व्यापनादेर्धर्मस्यापह्नवो न तु धर्मिणस्तिमिरादेर्यथा "व्याप्तिव्याजेन जाने तिमिरमवयवान्सर्वतो लिम्पती"-वेति। अन्यथा तिमिरव्याजेनेत्यादिः स्यादित्यलं बालविकल्पानामायासनेन। सापह्नवा यथा " यः पाञ्चजन्येने "त्यादि॥ यथा च—

बलाआमेहनिहेण नहंसि निव्वाणमहिलसआ।
मुत्ताकलावकन्थव्व गिम्हम्मि कालवीरेण॥ १५७॥
[ बलाकामेघनिभेन नभसि निर्वाणं अभिलषिता।
मुक्ताकलापकन्थेव ग्रीष्मके कालवीरेण॥ ]

आर्थी यथा—

महिलासहस्सभरिए तुह हिअए सुहअ सा अमाअन्ती।
अणुदिणमणण्णकम्मा अङ्गं तणुअं वि तणुएइ॥ १५८॥
[ महिलासहस्रभरिते तव हृदये सुभग सा अमान्ती।
अनुदिवसमनन्यकर्मा अङ्गं तनुकमपि तनूकरोति॥ ]

अत्र वाक्यार्थप्रतीतिसमय एव पदार्थसमन्वयपर्यालोचनया आ(अ)वर्तमानस्य हेतोरतात्त्विकत्वावगतेरार्थः सम्भावनात्मक इवार्थ इत्यार्थी। यत्र तु पर्यवसिते वाक्यार्थे योऽर्थोऽलंकारो वा प्रतीयते स प्रतीयमानो व्यङ्ग्य इत्युच्यते। अपर्यवसिते मुख्यबाधे लक्ष्यः, तदभावे स्वार्थ इति सर्वत्र निर्णयः। आर्थी फलोत्प्रेक्षा यथा—

ब्रह्माम्भोजं सनालं ध्वजपरिचायिनीं स्वर्नदीवैजयन्तीं
चण्डांशोरातपत्रास्थितिमनुभवतो मण्डलं दण्डलग्नम्।
कर्तुं देवो गणेशस्त्रिभुवनभवनं सम्भृतस्तम्भशोभं
तुण्डं क्रीडानुबन्धादुपरि सरलयन्नस्तु विघ्नच्छिदे वः॥ १५९॥

कस्तूरीतिलकन्ति भालफलके देव्या मुखाम्भोरुहे
रोलम्बन्ति तमालबालमुकुलोत्तंसन्ति मौलावपि ।
कर्णे या विकचोत्पलन्ति कुचयोरङ्के च कालागुरु-
स्थासन्ति प्रथयन्तु तास्तव शिवं श्रीकण्ठकण्ठत्विषः ॥१६०॥

इत्यादौ कस्तूरीतिलकादेरुपमानस्यैव भालफलकादौ यथा सम्भव उचितो न तथा कण्ठत्विडादेरुपमेयस्येति प्रकृतस्याप्रकृतकस्तूरीतिलकादिरूपतया परिणामात् परिणामगर्भोपमैव न रूपकोपक्रमोत्प्रेक्षेति वक्तव्यम् । एवमलंकारान्तरेष्वपि परिणाममिश्रत्वं विबोध्यम् ।

इवादौ निश्चयाभावाद् विषयस्य परिग्रहात् ।
क्वचिदध्यवसायेन नोत्प्रेक्षापि तु संशयात् ॥

इति संग्रहः । एवं च सन्देहगर्भत्वादुत्प्रेक्षाया

नूनं प्रियपरिष्वङ्गगाढपीडनमन्युना ।
जातं कुरङ्गशावाक्ष्याः श्यामवक्त्रं कुचद्वयम् ॥ १६१ ॥

इत्यादौ नूनं ध्रुवमित्येवमादीनां सम्भावनाद्योतकेवादिवैलक्षण्येनावधारणार्थैवादिवन्निश्चयवाचकत्वात्सन्देहगर्भत्वाभावेनोत्प्रेक्षाभ्रमो न विधेयः । निश्चयगर्भत्वेनाध्यवसायस्य सिद्धत्वादतिशयोक्तिरेवेति तु न्यायः ।

अद्धा नूनं सत्यमित्येवमादौ
शाब्दः साक्षान्निश्चयोऽस्तीति युक्ता ।
नैवोत्प्रेक्षा सा हि सम्भावनायां
सा चापि स्यात्संशयान्नात्र सोऽस्ति ॥

इह तु

जाने जगन्मोहनकौतुकेन विधाय कूजामिषमन्यपुष्टा ।
अहर्निशं चूतवनेषु यस्यामधीयते मन्मथमोहमन्त्रम् ॥ १६२ ॥

---

१. स्थासन्ति ।

इति जाने मन्ये इत्येवमादीनां प्रतीतिप्रतिपादकत्वे प्रतीति( ते )श्च सन्देहनिश्चयरूपतया द्वैविध्यसम्भवादन्यस्यान्यरूपतया सम्भावने निमित्तसम्भवसामग्रीसद्भावाज्जाने इत्यस्येवार्थपर्यवसायित्वेन सम्भावनायाः प्रतिपत्त्योत्प्रेक्षैव। यत्र तु अन्यस्यान्यरूपतया सम्भावने निमित्तः? ( निमित्ताभावः ) तत्रोत्प्रेक्षाशङ्का न कार्या।

यदेतच्चन्द्रान्तर्जलदलवलीलां प्रकुरुते
तदाचष्टे लोकः शशक इति नो मां प्रति तथा।
अहं त्विन्दुं मन्ये त्वदरिविरहाक्रान्ततरुणी-
कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥ १६३ ॥

अत्र नो मां प्रति तथेत्यनेन शशकपक्षस्य निराकृतत्वा( द् )न्यस्यान्यरूपतया सम्भावनाया अभावान्मन्य इत्यनेन किणपक्षस्यैव निश्चितत्वादतिशयोक्तित्वमेव ॥ ३२ ॥

अन्यरूपतया निश्चयो भ्रान्तिमान् ॥ ३३ ॥

विषयस्यान्यरूपस्यापि रूपान्तरत्वेनासम्यगभिमानरूपो निश्चयो भ्रान्तिमान्। उदा०—

पुसिआ कण्णाहरणेन्दणीलकिरणाहआ ससिमऊहा।
माणिणिवअणम्मि सकज्जलंसुसङ्काए दइएण ॥ १६४ ॥
[ प्रोञ्छिताः कर्णाभरणेन्द्रनीलकिरणाहताः शशिमयूखाः।
मानिनीवदने सकज्जलाश्रुशङ्कया दयितेन ॥ ]

अत्र सादृश्यहेतुका भ्रान्तिः। तदन्यनिमित्ता यथा—

प्रासादे सा पथि पथि च सा पृष्ठतः सा पुरस्सा
पर्यङ्के सा दिशि दिशि च सा तद्वियोगातुरस्य।
हंहो चेतः प्रकृतिरपरा नास्ति मे कापि सा सा
सा सा सा सा जगति सकले कोऽयमद्वैतवादः ॥ १६५ ॥

अत्र गाढरागानुभवहेतुकं तन्मयतानुसन्धानं प्रासादादेर्वल्लभारूपत्वेन प्रतीतौ निमित्तम्। एवं च—

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः ।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १६६ ॥

"देवमपि हर्षं पितृशोकविह्वलीकृतं श्रियं शाप इति मही महापातकमिति राज्यं रोग इति भोगान् भुजगा इति निलयं निरय इत्यादि मन्यमानम्" इत्यादौ सादृश्यनिमित्तं विना भावावसायशोकादिनिमित्तभेदेऽपि नालङ्कारान्तरबुद्धिः कार्या। प्रतीतिभेदे ह्यलंकारभेदो युक्तो न निमित्तभेदेऽलंकारानन्त्यप्रसङ्गात्। तद्भेदे तु कविप्रतिभोत्थापितविच्छित्तिसद्भावे अन्तर्भाव एव न्याय्यः। यदि च सादृश्याद्वस्त्वन्तरप्रतीतिर्भ्रान्तिमान् इत्यव्यापकं लक्षणं तर्हि व्यापकं लक्षणान्तर विधेयम्। न त्वलङ्कारान्तरमुपसङ्ख्येयम्। सादृश्यव्यतिरिक्तनिमित्तोत्थापितायां च भ्रान्तौ विच्छित्तिविशेषसम्भवे कथं नामानलंकारता। अलङ्कारत्वे च किमिति भ्रान्तिमद्बहिर्भावः। तेन

दातुं वाञ्छति दक्षिणेऽपि नयने वामः करः कज्जलं
मौञ्जङ्गं च भुजेऽङ्गदं घटयितुं वामेऽपि वामेतरः ।
इत्थं स्वं स्वमशिक्षितं भगवतोरर्धं वपुः पश्यतोः
साधारस्मितलाञ्छितं दिशतु वो वक्त्रं मनोवाञ्छितम् ॥ १६७ ॥

इत्यत्र सतताभ्यासप्रवृद्धसंस्कारहेतुका भ्रान्तिरेव। संस्कारबोधं विना तत्र भ्रान्त्यभावात्। न च संस्कारस्य प्रवृद्धत्वे प्रबोधत्वे वा कश्चिद्विशेषः भ्रान्तौ। तेनैवमादौ भ्रान्तिमानेव

सन्देहसम्भावनयोर्यथास्ति प्रतीतिभेदः स्फुट एव तद्वत् ।
सादृश्यहेत्वन्तरयोर्भ्रमेषु न लेशतः क्वापि विशेषबुद्धिः ॥
प्रतीतिभेदेन विना न वाच्यः कुत्राप्यलङ्कारगतश्च भेदः ।
निमित्तभेदेन च भिन्नतायां प्रसज्यते सा खलु संशयादौ ॥

इति। "श्रियं शाप" इत्यादौ चारोपगर्भेति च न वाच्यम्। श्रियमित्यादि हि कवेरुक्तिः। शाप इत्यादि भ्रान्तस्य श्रीहर्षस्य भ्रान्तिरूपप्रतीत्यनुकरणमिति भिन्नप्रमातृप्रत्ययविषयीकृतत्वेनारोपासम्भवादध्यवसायमूल एव भ्रमः। एकप्रमातृविषयीकृतत्वे विषयविषयिणोरारोपो यत्र । न चारोपगर्भो भ्रमः

क्वचिदपि सम्भवति। शुक्तिकादीनां शुक्तिकादिरूपतयावगमे रजताद्यभिमानानुदयात्। एवं "वज्रपञ्जरमिति शरणागतैरसुरविवरमिति वार्तिकैः श्रीकण्ठाख्यो जनपदोऽवगत" इत्युल्लेखेऽपि नारोपगर्भता वाच्या। कविवर्णितश्रीकण्ठाख्यजनपदरूपस्य विषयस्य शरणार्थ्यादिभिर्वज्रपञ्जराध्यवसायतयोल्लिखितत्वे आरोपायोगात् ॥ ३३ ॥

## एकस्यानेकधा कल्पनमुल्लेखः ॥ ३४ ॥

एकस्य वस्तुनस्तद्धर्मयोगादनेकधा कल्पनमुल्लेखः। तच्चानेकधा कल्पनं क्वचित्स्वारसिको वैकल्पिकः प्रत्ययः। क्वचित्स्वरसतस्तथा प्रतीतिभावेऽपि अनेकधा परिकल्पनम्। अयं च प्रमातृभेदेन विषयभेदेन च भवति। तत्र निजनिजवासनानुसारेण प्रमातृभिर्नियतनियतरूपतया कल्पने यथा—

णाराअणो त्ति परिणअवआहिँ सिरिवल्लहो त्ति तरुणीहिँ।
बालाहिँ उण कोदूहलेण एमे अ सच्चविओ ॥ १६८ ॥
[ नारायण इति परिणतवयोभिः श्रीवल्लभ इति तरुणीभिः।
बालाभिः पुनः कुतूहलेन एवमेव सत्यापितः ॥ ]

अत्र भगवतो जगत्पूज्यतालक्षणं नारायणत्वं सुभगत्वेन श्रीवल्लभत्वं सामान्येन पुरुषत्वं च वस्तुतो विद्यते। वासनाभेदात्तु नियतरूपतावगतिः। स्वारसिकेन तूपादिता यथा च

मल्लैः शैलेन्द्रकल्पः शिशुरितरजनैः पुष्पचापोऽङ्गनाभिः
गोपैस्तु प्राकृतात्मा दिवि कुलिशभृता विश्वकायोऽप्रमेयः।
क्रुद्धः कंसेन कालो भयचकितदृशा योगिभिर्ध्येयमूर्ति—
र्दृष्टो रङ्गावतारे हरिरमरघनानन्दकृत्पातु युष्मान् ॥ १६९ ॥

विषयभेदे यथा "गुरुर्वचसि पृथुरुरसि अर्जुनो यशसी"त्यादौ। यथा—

पृथुरसि गुणैः कीर्त्या रामो नलो भरतो भवान्
महतिसमरे शत्रुघ्नस्त्वं क्षितौ जनकः स्थितः।
इति स्वचरितैर्बिभ्रन्मूर्तिं चिरन्तनभूभृतां
कथमसि न मान्धाता देव त्रिलोकविजय्यपि ॥ १७० ॥

अनयो: श्लेषमूलाध्यवसायगर्भः। शुद्धो यथा—

साम्राज्ये सचिवो रणे सहचरः क्रीडाप्रसङ्गे सखा
युक्तायुक्तविचारवस्तुनि गुरुर्दुःखक्षणे बान्धवः।
किञ्चामुत्रिकचेष्टिते निरुपमं कल्याणमित्रं भवां—
स्त्यक्त्वा सम्प्रति मां जनं जन इव क्व प्रस्थितो निर्घृणः ॥१७१॥

अत्रैकस्यैव सचिवाद्यनेकरूपतया प्रतीतिरुत्पादिता नतु स्वरसत उत्पन्ना। अत एव ग्रहणस्य स्वारसिकत्वादनेकधा ग्रहणमिति न सूत्रितम् ॥ ३४ ॥

## सम्भाव्यमानस्य प्रतिभा ॥ ३५ ॥

कल्पनमित्यनुपक्तम्। प्रमाणान्तरेणानवगतस्य तत्तत्प्रस्तावादिकारणवशात्सम्भाव्यमानस्यार्थस्य कविना प्रतिभाख्येन चक्षुषा परिकल्पनमुल्लेखरूपं प्रतिभा। यथा—

स्वर्गस्त्री यदि तत्कृतार्थमभवच्चक्षुस्सहस्रं हरे—
र्नागी चेन्न रसातलं शशभृता शून्यं मुखेऽस्याः सतिः।
जातिर्नः सकलान्यजातिजयिनी विद्याधरी चेदियम्
स्यात्सिद्धान्वयजा यदि त्रिभुवने सिद्धाः प्रसिद्धास्ततः ॥ १७२ ॥

अत्रेयं लोकोत्तरसौन्दर्यभूमिर्यदि स्वर्गस्त्री तदद्दष्टचरैस्तद्रूपावगमनेन शचीपतेर्नयनसहस्रसाफल्य दृष्टमिति स्वर्गस्त्रीत्वे सति संभाव्यमानं परिकल्पितम्। एवं नागीत्यादि ज्ञेयम्। यथा वा—

गतं तिरश्चीनमनूरुसारथेः प्रसिद्धमूर्ध्वज्वलनं हविर्भुजः।
पतत्यधो धाम विसारि सर्वतः किमेतदित्याकुलमीक्षितं जनैः ॥१७३॥

शिशु॰ १-२

अत्र सामान्येन दृष्टस्य वस्तुन एवंविधा विकल्पाः सम्भवन्तीति मानान्तरानवगतस्य संभावनया कल्पनम्। अत एव नेयमतिशयोक्तिः। तत्र ह्यसम्बन्धे सम्बन्ध इत्यादौ असम्भाव्यमानोल्लेखः। इह त्वौचित्येन सम्भाव्यमानत्वम्। प्रमाणान्तरेण बाधितत्वाभावात्। नापि स्वभावोक्तिः। तस्यां हि कविसूत्रमात्रस्य वागगोचरो वस्तुस्वभाव शब्दाद्याथातथ्येन य था

क्रमेण प्रतीयते इति स्वरूपम्। स च स्वभावो यत्र प्रत्यक्षादिना प्रमाणेनावगतस्तत्र शुद्धा स्वभावोक्तिः। यत्र सम्भावनयोल्लिखितस्तत्रानया सह सङ्कीर्णता। यथा—

ध्यानादानान्मुकुलितदृशः कुम्भयोनेः पिपासो-
र्यो निर्यातुं सरभसमियेषाङ्गुलीरन्ध्रमार्गैः।
तस्मिन्पत्नीं हरति जलधौ वीरचर्याच्युतोऽस्मी—
त्यन्तर्ध्यायन् हिममुपययौ शोकसंकोचिताङ्गः॥ १७४॥

अत्र पातुं प्रस्तुतस्य मुनेः करपुटगतो जलधिर्भीतोऽवश्यमुपलक्षितं पलायनमार्गं चिन्तयतीति सम्भाव्यते। इयं क्वचिदतिशयोक्त्या सङ्कीर्णा यथा—

चक्रे श्रीविक्रमार्कः कनकमयतुलारोहणं नर्मदायां
वार्तेयं विन्ध्यशैलात्कथमपि परतः सर्वथा रक्षणीया।
नोचेद्वातापितापोत्कटतपसि मुनावागते दानलोभाद्-
भूयः स्यात्तुङ्गशृङ्गव्यतिकरदलितव्योममुद्रोऽयमद्रिः॥ १७५॥

अत्र कनकतुलारोहणवार्ताश्रवणादगस्त्यस्यागमनं सम्भाव्यमानं कल्पितं तस्मिंश्चागते रुद्धगगनेन विन्ध्येन भवितव्यमिति सम्भाव्यमानमुल्लिखितं इत्यतिशयोक्तिमूलत्वम्। एवमन्यत्र ज्ञेयम्।

यद्यप्यस्यां कल्पनं कारणादेः सम्भाव्यानां नानुमानं तथापि।
पूर्वं क्लृप्तं ह्यत्र वस्तूपबद्धं तत्र त्वार्थः[1] कल्पनाया निबन्धः॥

इति। अयं चात्रकक्ष्याभेदः असम्भाव्यया वस्त्वन्तररूपतया वस्तुनः सम्भावने उत्प्रेक्षा सम्भाव्यमानस्य वज्रपञ्जरमिति शरणागतैरित्यादावसम्भाव्यमानस्य वा कल्पनेऽनैकधात्वे उल्लेखः सम्भाव्यमानस्यैव स्वरूपेण कल्पने प्रतिभा। असम्भाव्यमानस्यैव स्वरूपेणैव सम्भावनरूपे कल्पने इयं च प्रचुरविषया तत्र तत्रावसातव्या॥ ३५॥

**यद्यथोक्तावसम्भाव्यमानस्य क्रियातिपत्तिः॥ ३६॥**

---

१. तत्र त्वर्थे।

कल्पनमित्यनुपश्यते । असम्भाव्यमानस्यार्थस्य कल्पनं क्रियातिपत्तिः । यदि शब्दार्थस्य यथादिभिरुक्तिश्चेत्स्यात् । अत एवातिशयोक्तेर्भेदः । तत्र हि सिद्धत्वादध्यवसायस्य शाब्दो निश्चय इह स्खलद्गतित्वेन साध्यत्वात् शाब्दोऽपि न निश्चयः । एवं चेत्स्यादिति । सम्भाव्यमानत्वादर्थस्य निश्चयाभावेपि इयमेव ।

विषयिणोऽध्यवसायविनिश्चयस्त्वतिशयोक्तिरितीह न सा भवेत् ।
स्खलति धीर्यदि्चेत्पदहेतुका यदियमेति न चापि विनिश्चयम् ॥इति ।

तेनेदमलङ्कारान्तरमेव । उदाहरणम्—

विच्छित्तिनर्मपरिकर्मविधौ त्वदीये[1]
लोलेक्षणे तव वदामि गिरा कियत्या ।
वैदग्ध्यतः सखि घटेत विवेचकोऽस्य
पुष्पायुधो यदि सहस्रविलोचनः स्यात् ॥ १७६ ॥

अत्र कामस्य लोचनसहस्रं यदि स्यात् तदा विवेचकत्वं युज्येतेति सम्भाव्य कल्पितमेवमन्यत्र ।

सौन्दर्यमिन्दीवरलोचनानां दोलासु लोलासु यदुल्ललास ।
यदि प्रसादाल्लभते कवित्वं जानाति तद्वर्णयितुं मनोभूः ॥ १७७ ॥

यथा वा

पुष्पं प्रवालोपहितं यदि स्यान् मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्याद्विशदस्य तस्याः ताम्रौष्ठपर्यस्तरुचः स्मितस्य ॥१७८॥

कु. १-४४.

अत्रौपम्यमसम्भाव्यं कल्पितमत एवमादौ न कल्पितोपमा । उपमानस्य यथाद्यभावेन सिद्धतया कल्पितत्वे तस्या भावात् । इहत्वौपम्यस्यैव कल्पनात् । आर्थी यथा—

---

१. तदीये ।

कि शाकानि न सन्ति भूधरसरित्कुञ्जेषु मूलानि वा
किं वा जीवनमेतदेव विहितं याञ्चैव नान्यत्कचित् ।
येन श्रीलवलोभजर्जरधियां चिन्तामणिध्यायिनां
दैन्येनैव समं प्रयाति निखिलः कालोऽत्र वो जन्तवः ॥१७९॥

अत्र यदि शाकाद्यभावो याञ्चैव च जीवनं भवेत्तदा चिन्तामणिध्यानाद्दैन्यं युज्येतेत्यर्थाप्रतीयते । कल्प्यस्यार्थस्यासम्भाव्यमानत्वाभावे चेदादिभिरुक्तावपि नायमलङ्कारः । यथा—

अज्ञानादथवाधिपत्यरभसादस्मत्परोक्षं हृता
सीतेयं प्रविमुच्यतां शठमरुत्पुत्रस्य हस्तेऽधुना ।
नोचेल्लक्ष्मणमुक्तमार्गणगणच्छेदोच्छलच्छोणित-
शश्वच्छन्नदिगन्तरोऽन्तकपुरं भृत्यैर्वृतो यास्यसि ॥ १८० ॥

एवं स्वर्गस्त्रीत्यादौ ज्ञेयम् ॥ ३६ ॥

## अध्यवसानमतिशयोक्तिः ॥ ३७ ॥

विषयनिगरणेनाभेदप्रतिपत्तिर्विषयिणोऽध्यवसानम् । इयं चाभेदप्रतिपत्तिर्विषयानुपादाने केवलविषयिवाचकशब्दप्रयोगबलेन वाक्याज्जायते इति शाब्दी । भ्रान्तिमदादौ तु निमित्तान्तरेण तस्मिंस्तत्प्रतीतिः प्रमात्रंतरस्योपजाता वक्त्रानूद्यते न तु जन्यत इति न प्रतिपत्तिः शाब्दी । इह तु वक्त्रा सुप्रतीतिरेव तथाविधा प्रतिपाद्यत इति शाब्दी प्रतिपत्तिः । तेनास्यास्ततो भेदः ।

प्रमात्रन्तरधीर्भ्रान्तिरूपा यस्मिन्ननूद्यते ।
स भ्रान्तिमान्स्वधीर्भ्रान्ता वक्त्रास्यां तु न वेद्यते ॥

इति सङ्ग्रहः ।

इयं च भेदे अभेदः, अभेदे भेदः, सम्बन्धेऽसम्बन्धः, असम्बन्धे सम्बन्ध इति चतुर्धा । कार्यकारणयोः पौर्वापर्यविध्वंसस्य चतुर्थभेदान्तर्भावात्पञ्चधेति न

वाच्यम्। तत्रापि समानकालताद्यसम्बन्धेऽपि विध्वंसपौर्वापर्यसम्बन्धस्य तत्सम्बन्धोपनिबन्धात्। अन्यथा देशान्तरेणासम्बन्धेऽपि तथोपनिबन्धे षष्ठस्यापि भेदस्य परिगणनीयतायामसङ्गतेर्निर्विषयत्वप्रसङ्गात्। नहि देशकालयोः पदार्थसम्बन्धे कश्चिद्विशेषः। येनैकत्र भेदत्वेन कथनमन्यत्र तदभाव इति स्यात्। अध्यवसाने च सर्वत्र तात्त्विकः प्रकृतो विषयस्तदन्यो उपचर्यमाणो विषयी तेनाभेदे भेद इत्यादिभेदत्रयस्य भेदादिविषयनिगरणे भेदादेर्विषयिण एवोपादानादभेदादिनाध्यवसानमित्यवसेयम्। न तु कविना समर्पितेन लौकिकेनातिशयेन वास्तवस्यातिशयस्याभेदाध्यवसायाद्भेदचतुष्टयेऽप्यध्यवसायमध्ये भेदे भेदादिकथनफले भेदाध्यवसानादतिशयोक्तिरिति भ्रमणीयम्। लौकिकस्यातिशयस्य कविसमर्पितेनाभेदाध्यवसायरूपस्य सर्वत्र सम्भवादुपमादेरपि फलेऽध्यवसितप्राधान्येनातिशयोक्तित्वापत्तौ निर्विषयत्वप्रसङ्गादित्यलं बहुना। क्रमेण यथा—

लावण्यसिन्धुरपरैव हि केयमत्र
　　यत्रोत्पलानि शशिना सह संप्लवन्ते।
उन्मज्जति द्विरदकुम्भतटी च यत्र
　　यत्रापरे कदलिकाण्डमृणालदण्डाः ॥ १८१ ॥

अत्र कान्तातन्नेत्रादीनां लावण्यसिन्धूत्पलादिभिर्भेदे अभेदः। नन्वेवमादावतिशयोक्त्यभ्युपगमेऽप्रस्तुतप्रशंसाया अप्रस्ताव एव स्यात्। तत्राप्यध्यवसायेन वाक्यार्थलक्षणाया अभ्युपगमात्। तेन पदार्थाध्यवसायेऽतिशयोक्तिर्वाक्यार्थाध्यवसायेऽप्रस्तुतप्रशंसेति विवेकः। अविवेक एवायम्। तथाहि वाक्यार्थनिष्ठत्वेनाध्यवसानस्यात्र तस्यां च तुल्यत्वेऽपि अतिशयोक्तिरित्यन्वर्थार्थानुसारेण यत्रार्थस्यातिशयविवक्षा तत्रातिशयोक्तिर्यत्र पुनरतिशयप्रतिपादनं विनवान्यमुखेन यथास्थित एवार्थः प्रतिपाद्यते तत्राप्रस्तुतप्रशंसेति निर्णयः।

अप्रस्तुतात्प्रस्तुतस्य गतिर्यातिशयं विना ।
साप्रस्तुतप्रशंसान्या विज्ञेयातिशयोक्तधीः[1] ॥

इति सङ्क्षेपः ।

व्यञ्जितानङ्गलीलेन शृङ्गाररसबन्धुना ।
तन्वी नवानुरागेण सान्यैव घटिताभवत् ॥ १८२ ॥

अत्र तन्व्या अनन्यत्वेऽप्यन्यत्वेन घटितत्वोक्तावभेदेऽपि भेदः ।

अस्त्रप्रतिममाधेयं स्तनद्वन्द्वस्य दूषणम् ।
स्फुटतां कञ्चुकानां यन्नायात्प्रावरणीयताम् ॥ १८३ ॥

अत्र स्तनयोरावरणीयतासम्बन्धेऽपि असम्बन्धः । कञ्चुकानां स्फुटनासम्बन्धेऽपि सम्बन्धश्च प्रतिपादितः । यथा च—

यान्तीषु यद्द्वारविलासिनीषु करेणुभिः पूरितदिक्तटाभिः ।
दिनेऽपि दिक्पालपुरीगवाक्षाः प्रक्षालनं चन्द्रिकया लभन्ते ॥१८४॥

अत्र चन्द्रिकाप्रक्षालनलाभासम्बन्धेऽपि सम्बन्धो निबद्धः । इयं च रूपकवत्सम्बन्धान्तरहेतुकापि तत्र तत्र द्रष्टव्या । तथा हि "व्यञ्जितानङ्गे"त्यादावनन्यत्वादावन्यत्वेनाध्यवसायाद्वैपरीत्यं सम्बन्धः । कार्यकारणभावपूर्विका यथा—

आज्ञाधरः पञ्चशरः पुरस्तात् सुधा पुनः कर्मकरी मुखस्य ।
स चापि सौन्दर्यविशेषबन्दी यत्रेन्दुरिन्दीवरलोचनानाम् ॥१८५॥

अत्राज्ञाधर इत्यत्राज्ञाधरेण सह मदनस्यैककार्यकारित्वसम्बन्धनिमित्ते आज्ञाधरत्वासम्बन्धेऽपि सम्बन्धाध्यवसाने इन्दीवरलोचनासन्दर्शनेन मदनविकारोत्पत्तिः कार्यरूपा कारणरूपेणाज्ञाधरत्वेनाभेदेनाध्यवसिता । मुखापेक्षया तु सुधादीनां निकर्षा सम्बन्धेपि[1] ( सन्निकर्षासम्बंधेऽपि ) सादृश्यनिमित्तसम्बन्धाध्यवसायगर्भं कारणरूपस्य कर्मकरत्वादिना कार्येणाभेदाध्यवसायो मुखसौन्दर्यातिशयावगमफलः । एवं च—

---

१. °क्तिधीः ।

इन्दुर्लिप्त इवाञ्जनेन जडिता दृष्टिर्मृगीणामिव
प्रम्लानारुणिमेव विद्रुमरुचिः श्यामेव हेमप्रभा।
कार्कश्यं कलयापि कोकिलवधूकण्ठेष्विव प्रस्तुतं
सीतायाः पुरतश्च हन्त शिखिनां बर्हाः सगर्हा इव ॥१८६॥

इत्यत्यातिशयोक्तिरेव नाप्रस्तुतप्रशंसा। वस्त्वसम्भाविनोऽतिशयस्य प्रतिपिपादयिषितत्वात्। यत्र त्वतिशयं विना यथास्थित एवार्थोऽर्थान्तरमुखेन प्रतिपाद्यते तत्राप्रस्तुतप्रशंसा। अत्र च यद्यपि सर्वत्र भेदेऽभेदादौ वस्तुतोऽसम्बन्धे सम्बन्ध एव वर्णयितुं शक्यते तथाप्यवान्तरभेदविवक्षयान्यैर्लक्षितत्वाद्विविक्तस्यासम्बन्धे सम्बन्धस्य दर्शितत्वाच्च तद्विभागेन निर्देशः कृतः ॥३७॥

## अप्रस्तुतादन्यप्रतीतिरप्रस्तुतप्रशंसा ॥ ३८ ॥

सामान्याद्विशेषस्य विशेषाद्वा सामान्यस्य कार्यात्कारणस्य कारणाद्वा कार्यस्य सदृशंविरुद्धादेश्च तथाविधस्याप्रस्तुतात्प्रस्तुतस्य प्रतिपत्तिरप्रस्तुतप्रशंसा। इयं चासम्बन्धप्रलापिता प्रसङ्गेनाप्रस्तुतस्याभिधातुमयुक्तत्वाद्बाधितमुख्यार्थतया सामान्यविशेषभावकार्यकारणत्वसादृश्यविरोधादिके सम्बन्धे चारुप्रतीत्यादिलक्षणे प्रयोजने च सति प्रस्तुतमर्थं प्रतिपादयन्ती लक्षणामूलैव युक्ता न तु व्यञ्जनात्मिका वाच्यस्याबाधितत्वेन पर्यवसितत्वे व्यञ्जनस्य सम्भवात्। लक्षणा च वाच्यस्य सम्भवे शुद्धा ताटस्थ्येनार्थान्तरप्रतिपादनात्। असम्भवे त्वध्यवसानात्मिका। यथा च गङ्गायां घोष इत्यादौ शुद्धायां लक्षणायां तटादीनां न तत्त्वप्रतिपत्तिरध्यवसानान्तःपातित्वेन शुद्धत्वाभावप्रसंगात्। यथोक्तमन्यत्र—

मुख्यार्थबाधादिसमस्तहेतुयोगादसौ लक्षणयैव युक्ता।
विरोधमन्वर्थनिबन्धनादिभेदस्थितेनापि च पञ्चधैव ॥

इति। एवं चास्य लक्षणामूलत्वे स्थिते क्वचिद्वाच्यस्यासम्भवेऽपि न कश्चिद्दोषः। तस्यां वाच्यसम्भवानुपयोगात्। न हि पदार्थान्वयवेलायां वाक्यार्थ-

१. दल। २. सद्धर्म। ३. सामान्य°

प्रतिपत्त्युत्तरकालं वा मुख्यार्थबाधे लक्षणायाः कश्चिद्विशेषः। क्रमेणोदाहरणम्—

दुर्जनदूषितमनसां पुंसां सुजनेऽपि नास्ति विश्वासः।
बालः पायसदग्धो दध्यपि फूत्कृत्य भक्षयति ॥ १८७ ॥

अत्र केनापि दुर्जनेन विप्रलब्धस्य कस्यचित्सुजनविशेषे विस्रम्भो न जायते तस्य सुजनस्येयं विशेषे प्रस्तुते सामान्योक्तिः। यथा वा—

निजजनपदरञ्जनेन राज्ञां कति न गुणा गरिमाणमुद्गिरन्ति।
स्थगयति गगने यशः शशाङ्कं विलुठति पादतले हठेन च श्रीः॥१८८॥

अत्र जयसिंहाख्ये राजविशेषे बोद्धव्ये प्रस्तुते सामान्येन राज्ञां जनपदरञ्जनं गुणोपबृंहकमित्युक्तम्। एवमादेः प्रबन्धस्थस्य सामान्यनिष्ठस्य वाक्यस्य वाक्यान्तरेण विशेषोपादाने अर्थान्तरन्यासत्वमेव तदभावेऽप्रस्तुतप्रशंसा यथोदाहृतम्। तेन

तण्णत्थि किंपि पइणो पकप्पिअं जं ण णिअइघरणीए।
अणवरअगमणसीलस्स कालपहिअस्स पाहिज्जं ॥ १८९ ॥

[ तन्नास्ति किमपि पत्युः प्रकल्पितं यत् न नियतिगृहिण्या।
अनवरतगमनशीलस्य कालपथिकस्य पाथेयम् ॥ ]

इत्यादौ वाक्यान्तरेण प्रहस्तवधादेर्विशेषस्योपादाने सामान्याभिधानमर्थान्तरन्यास एवेति नाप्रस्तुतप्रशंसाबुद्धिः कार्या।

त्वं चेत्संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हेम्नो न काचित्क्षतिः।
धत्से चेच्छिरसा जडांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजवल्लभस्य जगतामीशोऽसि किं ब्रूमहे ॥१९०॥

अत्रेश्वराणां स्वातन्त्र्येण यत्किंचनकारित्वं भवतीति सामान्ये प्रस्तुते विशेषस्य वर्णनम्।

अनेन सार्धं सरयूवनान्ते कूजन्मयूरीमुखरे विहृत्य।
विलासवातायनसेवनेन श्लाघ्यामयोध्यां नगरीं विधेहि ॥१९१॥

अत्र स्वयंवराख्ये कारणे प्रस्तुते कार्यस्याभिधानम्।

कन्ये समालोकय कान्यकुब्जमकुब्जकीर्तिं नरनाथमेनम्।
ककुब्जये यस्य धरापरागैर्भवन्ति वारां निधयः स्थलानि ॥१९२॥

अत्र स्वयंवरकार्ये प्रस्तुते कारणरूपस्य कान्यकुब्जगतस्य गुणवत्त्वस्य कथनम्। न चात्र कार्यकारणयोरपि प्रस्तुतत्वम्। स्वयंवरप्रतारणार्थमुपात्तत्वात्। अर्थान्तरन्यासादावपि समर्थकादेः प्रस्तुतप्रसंगाच्च।

आबाल्यादपि यो विदारितमदोन्मत्तेभकुम्भस्थली-
स्थालीमध्यकपोलरक्तरसवन्मुक्तापुलाकप्रियः।
हस्तस्तस्य कथं प्रसर्पति पुनः कृच्छ्रेऽप्यवस्थान्तरे
गर्भावर्तिविवर्तमानशशकप्राणापहारे हरेः॥ १९३॥

अत्र हरिवृत्तान्तेन तत्सरूपस्योदारचरितस्य प्रतीतिः।

देव त्वय्यतुलप्रतापमहसि प्राप्ते प्रतिक्ष्मापति-
व्याकोशासिलतासितोत्पलवनीमानद्विरेफप्रथाम्।
मालिन्यं ककुभां मुखेषु मुदिताः पौराङ्गनाः साधवः
सानन्दा विलसन्ति हन्त सुहृदां सद्मस्वभग्नाः श्रियः॥ १९४॥

अत्र कस्मिंश्चिद्राजनि संग्रामे हते दिगादीनां मालिन्यादि[1] जातमिति प्रस्तुते वैमल्यादि अप्रस्तुतमभिहितमिति वैपरीत्यं सम्बन्धः। यथा वा—

चेतस्सौख्यं किमपि भजते कीर्तिरुल्लासमेति
प्रौढा लक्ष्मीः सपदि बत सा जायते नूतमेव।
अस्माकं त्वं यदिह नरनाथार्थिनां सम्मुखत्वं
सम्प्राप्तोऽसि प्रसृमरपरत्यागलीलाविनोदः॥ १९५॥

---

१ वैमल्यादि जातमिति प्रस्तुते मालिन्यादि अप्रस्तुत°—

अत्र सम्मुखत्वे सति दुःखादि भवतीति प्रस्तुते तद्विरुद्धस्य सुखादेः प्रतिपादनमिति विरोधः सम्बन्धः। न चास्मिन्नतिशयोक्तिः दुःखादिगतस्यातिशयस्याविवक्षितत्वादप्रतीतेश्च। अपि तु भद्रं भद्रमिति ब्रूयादित्युक्तदिशा साक्षादमङ्गलस्य वक्तुमयुक्तत्वेऽन्यत्राशक्यवचनीयत्वे वा विपरीतलक्षणयाभिधानम्। यथा वा—

धन्याः खलु वने वाताः कल्हारस्पर्शशीतलाः।
राममिन्दीवरश्यामं ये स्पृशन्त्यनिवारिताः ॥ १९६ ॥

अत्राहमधन्य इति प्रस्तुते वाता धन्या इति विपर्ययेनोक्तम्। सम्बन्धान्तरे यथा—

सर्वः कश्चन निश्चलेक्षणपुटो दीनः समासेवते
मामेवेति मुधामुना तव रमे गर्वेण नाहं रमे।
वाग्देव्याश्चललोचनाञ्चलरुचा मैत्रीपवित्रीकृतै-
र्येनासज्जनरागिणीति चपले स्वप्नेऽपि न स्पृश्यसे ॥१९७॥

अत्र रमात्मकाद्वाच्यादप्रस्तुतात्प्रस्तुतस्य लक्ष्मीवतः प्रतीतिमत्त्वर्थरूपेण (प्रतीतिसत्त्वात्साद्दश्यरूपेण) सम्बन्धान्तरेणाप्रस्तुतप्रशंसा। एते च वातानामचेतनत्वाद्रमाया असन्निहितत्वेन सम्बोध्यत्वाभावाच्च वाच्यासम्भवेनोदाहरणे। एवं सम्बन्धान्तरेण श्लेषादिना च स्वयमभ्यूह्यम् ॥ ३८ ॥

## स्तुतिनिन्दाभ्यां व्याजस्तुतिः ॥ ३९ ॥

अन्यप्रतीतिरित्यनुषङ्गः। एषापि लक्षणामूलैव। तेनात्र निन्दास्तुत्योर्लक्ष्यत्वेन न पुनर्व्यङ्ग्यतया गम्यत्वम्। वक्तृप्रकरणादिपर्यालोचनेनामुख एव वाच्यबाधनात्। स्तुत्या निन्दा निन्दया वा स्तुतिर्यत्र भवति सा व्याजस्तुतिः। क्रमेण यथा—

परिणाममहुरफलभरेहि पहिआणं वारिदक्खुधेण।
एतेण खदिरवुक्खेण भूसिदा जेदु मअभूमी ॥ १९८ ॥
[ परिणाममधुरफलभारकैः पथिकानां वारितक्षुधेन।
एतेन खदिरवृक्षेण भूषिता जयतु मरुभूमिः ॥ ]

अत्र मरुभूमेः स्तुत्या निन्दा लक्ष्यते खदिरस्य फलाद्यसम्भवात्। यथा वा—

धन्यासि या कथयसि प्रियसङ्गमेऽपि
विस्रब्धचाटुकशतानि रतान्तरेषु।
नीवीं प्रति प्रणिहिते तु करे प्रियेण
सख्यः शपामि यदि किञ्चिदपि स्मरामि॥ १९९॥

अत्र विपरीतलक्षणया त्वमधन्येति गम्यते। यथा चात्र न व्यतिरेकध्वनिः तथोक्तमन्यत्र। यथा—

कृपणेन समो दाता न भूतो न भविष्यति।
अस्पृशन्नेव वित्तानि यः परेभ्यः प्रयच्छति॥ २००॥

अत्र स्तुत्या निन्दावगम्यते।

चञ्चच्चुम्बति काञ्चनाचलमुखं कण्ठं क्षमायन्दिनां
नो मुञ्चत्यचलेन्द्रवक्षसि चिरं लीलां समालम्बते।
किं चालिङ्गति दिक्तटान्वितनुते क्रीडां भुजंगैस्समं
कीर्तिर्मानमपास्य पश्य तरुणी धिक् चेष्टितैस्तावकी॥२०१॥

अत्र कीर्तिप्रियतमात्वमुखेन निन्दया सर्वव्यापित्वमिति स्तुतिर्लक्ष्यते। इहान्यस्तुतिनिन्दाभ्यां परस्य निन्दास्तुत्योरतिशयविवक्षायां "इन्दुर्लिप्त इवाञ्जनेने" त्यादावतिशयोक्तिरत्र हीन्द्वादीनां निन्दया मुखादीनां स्तुत्यतिशयोऽवगम्यते। एवमन्यस्तुत्यान्यनिन्दातिशयप्रतीतावपि अतिशयोक्तिरेव। अतिशयविवक्षाभावे परमुखेन निन्दास्तुतिप्रतीतौ "धन्याः खलु वने वाता" इत्यादाविवाप्रस्तुतप्रशंसा। अत्र हि वातानां स्तुत्या वक्तुर्निन्दावगम्यते। एवमन्यनिन्दयान्यस्तुतिरप्यतिशयाभावेऽप्रस्तुतप्रशंसैव। यस्यैव स्तुतिनिन्दे तस्यैव निन्दास्तुतिप्रतीतौ त्वतिशयविवक्षायां व्याजस्तुतिः। एवं चास्यामतिशयविवक्षयाध्यवसायात्मकविपरीतलक्षणामूलभेदत्वेन च कदाचिदतिशयोक्त्या सह तुल्यत्वेऽपि विषयभेदनिबन्धनस्ततो भेदः। निन्दास्तुतिरूपविच्छित्त्यभावेऽतिशयविवक्षायां विपरीतलक्षणातिशयोक्तिरेवाति-

शयाभावे तु अप्रस्तुतप्रशंसेति निर्णयः। ननु च प्रयोजनरहिताया लक्षणायाः कुशलेत्यादिवत्सौन्दर्यातिशयाभावान्नालङ्कारता। सप्रयोजनायास्त्वतिशयोक्त्याद्यलंकारत्वाभ्युपगमे अविवक्षितवाच्यस्य ध्वनेर्विपयापहारः स्यात्। न चैवमादौ लक्षणायाः प्रयोगत्वेन? (प्रयोगप्राचुर्येण) व्यंग्यस्य वाच्यायमानत्वेनागूढत्वेऽतिशयोक्त्यादौ ध्वनित्वाभावेनालङ्कारतैवेति वाच्यम्। साम्प्रति(क)कविभिः क्रियमाणानां लक्षणानां प्रचुरप्रयोगाभावादलंकारत्वाभावप्रसंगात्। किं च कविना भिन्नवत्त्वेनोत्प्रेक्षितस्योपचारस्य तदा ध्वनित्वमुत्तरकालं[1] तु तदनुसारेण प्रयोगप्राचुर्येण गुणीभूतव्यंगत्वादलंकारता। क्वचित्कस्यचिदुपचारस्य प्रसिद्धत्वेनालंकारता तस्यैवान्यत्राप्रसिद्धत्वाद्ध्वनित्वमिति[2] विरुद्धमिवापद्यते। यथास्य लक्षणायां व्यंग्यस्यागूढत्वं नास्ति तयोक्तमन्यत्र। तत्कथमलंकारता ध्वनित्वं[3] चेति वाच्यम्। उच्यते। लक्षणायामभिधाया व्यापारत्रयसम्भवाल्लक्षणालम्बनेन लक्ष्यप्रतीतिरतिशयोक्त्याद्यलंकारान्तरप्रयोजिका व्यंजनानुसारेण व्यङ्ग्यावगतौ ध्वनिरिति न कश्चिद्दोषः।

लक्ष्यस्य यल्लक्षणया प्रतीतिः सा स्यादलंकारवचोनिमित्तम्।
फलस्य या व्यंजनतो गतिस्सा ज्ञेया ध्वनित्वव्यपदेशहेतुः॥

इति संग्रहः। कुशलेत्यादौ रूढौ तु मुख्यार्थबाधादेरनवगमाद्वाचकतुल्यत्वेन लाक्षणिकत्वाप्रतीतेर्नालंकारता। न च लक्षणैव व्यञ्जनं तदन्तर्गतत्वं वा। तथा च ध्वनिः—

भक्त्या बिभर्ति नैकत्वं रूपभेदादयं ध्वनिः।
कस्यचिद् ध्वनिभेदस्य सा तु स्यादुपलक्षणम्॥

इति। एवं च क्वचिल्लाटानुप्रासेऽर्थान्तरसंक्रमितवाच्यस्य नाभावः। शब्दपौनरुक्त्यमात्रप्रसक्तत्वाल्लाटानुप्रासस्य। एवं च तत्र तत्रालंकारान्तरेषु ध्वनिसम्भवेऽपि न कश्चिद्दोषः भिन्नकक्ष्यत्वादिति स्थितम्॥ ३९॥

---

१. ध्वनित। २. ध्वनितं। ३. ध्वनितं।

## प्रतिपक्षादिसम्बन्धिस्वीकारः प्रत्यनीकम् ॥ ४० ॥

व्याजस्तुतौ निन्दास्तुतिभ्यामन्यगतिः । इह तु बलवतः प्रतिपक्षस्य तिरस्काराशक्तौ तत्सम्बन्धिनो दुर्बलस्य बाध्यतया स्वीकारमुखेन तिरस्कर्तुर्निन्दाद्वारा बलवतः स्तुतिप्रतिपादनरूपमेकं प्रत्यनीकम् । अत एव व्याजस्तुतेर्भेदः । तत्र ह्येकस्यैव निन्दादिना स्तुत्यादिरिह त्वन्यनिन्दया बलवत्स्तुतिः । तस्यां च निन्दादिना स्तुत्यादिलक्षणादिह तु शाब्दत्वमपि निन्दादेः । एतेनातिशयोक्त्यादेरपि भेदः सिद्धः । तथा प्रतिपक्षसम्बन्धिनश्च प्रतिपक्षस्य तद्बाधकतया स्वीकारः तथैव द्वितीयम् । आदिशब्देन प्रतिपक्षादन्यस्य सदृशादिरूपस्य सम्बन्धिनोऽभिलपणीयत्वेन परिहरणीयत्वेन वा स्वीकारस्तृतीयम् । उदाहरणं—

न यस्य स्वर्गजयिनः कर्तुं किञ्चित्क्षमो नृपः ।
भिदुरेण पुरस्त्रीणामुदरं तु जिगीषति ॥ २०२ ॥

अत्र स्वर्गजयिनो नृपतेः प्रतिकारं कर्तुमसमर्थस्य तत्सम्बन्धिपुरस्त्रीणामुदरजिगीषोपनिबद्धा । अत्र च न यस्य कर्तुं क्षम इति निन्दास्तुत्योः शाब्दत्वम् । अर्थावगमेयं तु यथा—

चन्द्रश्चन्दनपिण्डपाण्डुरवपुस्तस्याः कुरङ्गीदृशो
मुग्धेनाचलकाञ्चनच्छविमुषा वक्त्रेण निर्भर्त्सितः ।
कौटिल्यं सहजं कलापरिचयादाच्छाद्य सम्प्रत्यसौ
वक्त्रश्रीलिपिसौहृदेन कमलाल्लक्ष्मीं हरन्मोदते ॥ २०३ ॥

अत्र वक्त्रेण न्यक्कृतस्तत्सदृशत्वेन तदीयां कमलालक्ष्मीं हरति चन्द्र इत्युपात्तम् । वक्त्रप्रतीकाराशक्तत्वं त्वर्थादवमीयते । यथा वा—

मद्वैरिणः कठोरांशोरियं प्रणयभूरिति ।
रोषादिव तुषारेण निरदह्यत पद्मिनी ॥ २०४ ॥

अत्राशक्तेरनुपादानान्निन्दास्तुत्योरसम्भावनागर्भा व्याकृता (?) । यथ वा—

मम वल्लहेण राया णूणं जसहिं खलीकओ दाणिं ।
जोण्हाणिहद्वभरहि पतावअइ मं जेण ॥ २०५ ॥

[ मम वल्लभेन राजा नूनं यशोभिः खलीकृत इदानीम् ।
ज्योत्स्नानिभद्रवभरैः प्रतापयति मां येन ॥ ]

अत्र राज्ञा यशोमुखेन न्यक्कृतश्चन्द्रस्तद्वल्लभां ज्योत्स्नादावाग्निना तापयती-त्युक्तौ राजन्यशक्तस्तदीयां बाधत इत्यवगम्यते । बाधकतया स्वीकारेण यथा—

इदं मदं चन्द्रमसस्समन्तादस्मत्सपत्नस्य हरिष्यतीति ।
यस्मिन्पुरन्ध्रीवदनस्य लक्ष्मीं निजां व्यधुः प्राभृतमम्बुजानि ॥२०६॥

अत्र स्वयमशक्तैरम्बुजैश्चन्द्रप्रतिपक्षभूतैः तद्बाधनार्थं तत्प्रतिपक्षभूतस्य प्राभृतमुखेन वदनस्य स्वीकारः । अभिलषणीयत्वेन स्वीकारेण यथा—

पुष्पाणामेव निन्दामचकमत गुणान्पल्लवानामगृह्णात्
स्तुत्यासक्ता पिकानामभवदगणयद्राजहंसेषु दोषान् ।
भक्तिं व्यानञ्ज सान्द्रे मृगमदतिलके चन्दने नाङ्गरागे
ध्वान्तं तुष्टाव तुष्टा न तु मिहिरमहः कृष्णरागेण राधा ॥२०७॥

अत्र कार्ष्ण्यात्कृष्णसदृशानां पल्लवादीनां अभिलषणीयत्वेन स्वीकारः । परिहरणीयत्वेन स्वीकारेण यथा—

नीरागा मृगलाञ्छने मुखमपि स्वं दर्पणे नेक्षते
त्रस्ता कोकिलकूजितादपि गिरं नोन्मुद्रयत्यात्मनः ।
चित्रं दुःसहदुःखदायिनि धृतद्वेषापि पुष्पायुधे
मुग्धाक्षी सुभग त्वयि प्रतिपदं प्रेमाधिकं पुष्यति ॥२०८॥

अत्रेन्द्वादिसदृशस्य मुखादेरपि परिहारः । यद्यपि चात्राद्ये प्रत्यनीके प्रति-पक्षाख्ये कारणे सत्यपि प्रतीकारस्याकरणं तदीयस्याबाधकस्य च कारणाभावेपि बाध्यत्वं तथापि न विभावनाविशेषोक्ती । तदीयबाधेन प्रतिपक्षस्यैव बाधनात् ।

तत्सम्बन्धितिरस्कारद्वारा तस्यैव बाधनात् ।
विभावनाविशेषोक्त्योरत्र नाशङ्कनीयता ॥

इति संक्षेपः ॥ ४० ॥

## विना कंचित्सदसत्त्वे विनोक्तिः ॥ ४१ ॥

केनचिद्विना कस्यचिदसन्निधानेऽर्थान्तरस्य सत्त्वं शोभनत्वमसत्त्वं अशोभनत्वं वा विनोक्तिः । इयं च यद्विरहे सत्त्वं शोभनत्वं अर्थात्तत्सन्निधावशोभनत्वमिति विरूपसंघटनात्मकप्रतीयमानविषमालंकारमूला । आभ्यां द्वितीया तु समालंकारमूला । अस्याश्च यद्यपि येन विना सत्त्वमशोभनत्वं वा तस्य निन्दा स्तुतिर्वा प्रतीयते तथापि न व्याजस्तुत्यादावन्तर्भावः । तत्र हि स्तुतिनिन्दाभ्यां निन्दास्तुत्यो अवगतिरिह तु विनार्थविवक्षया तत्प्रतीतिः, न तु स्तुतिनिन्दाभ्यामिति ततो भेदः । एवं च विच्छित्त्यन्तरेण निन्दास्तुत्योः प्रतिपादनादस्त्येव भङ्गीभणितिरूपमलंकारत्वं इति विनोक्तिर्न कश्चिदलंकारो विच्छित्तिविशेषाभावादिति न वाच्यम् । क्रमेणोदाहरणम्—

मृगलोचनया विना विचित्रव्यवहारप्रतिभाप्रभाप्रगल्भः ।
अमृतद्युतिसुन्दराशयोऽय सुहृदा तेन विना नरेन्द्रसूनुः ॥२०९॥

अत्र मृगलोचनया विना शोभनत्वम् । यथा वा

सामी पिसुणविमुक्तो मच्छररहिओ कवी तहा लोए ।
विसहरसुण्णो वि णिही पाविज्जइ पुण्णपुण्णेहिं ॥ २१० ॥

[ स्वामी पिशुनविमुक्तः मात्सर्यरहितः कविस्तथा लोके ।
विषधरशून्योऽपि निधिः प्राप्यते पूर्णपुण्यैः ॥ ]

अत्र विनाकृताख्यस्य साधारणधर्मस्य विमुक्तादिशब्दैरसकृदुपात्तत्वात्प्रतिवस्तूपमोपकृतत्वेन प्रकृताप्रकृतगतप्राप्तिरूपधर्मसकृन्निर्देशोत्थापितेन दीपकेन पोषिता पिशुनादिभिर्विना स्वाम्यादेरर्थात् शोभनत्वावगमादार्थी विनोक्तिः ।

प्रत्युक्ता मधुनेव काननमही मौर्वीव चापोज्झिता
शुक्तिर्मौक्तिकवर्जितेव कविता माधुर्यहीनेव च ।

तेनैकेन विनाकृता न शुशुभे चालुक्यराज्यस्थितिः
सामर्थ्यं शुभजन्मनां कथयितुं कस्यास्ति वाग्विस्तरः ॥२११॥

अत्र प्रत्युक्तेत्यादौ विनाशब्दप्रयोगमन्तरेणापि तदर्थप्रतीताव-शोभनत्वम् ॥ ४१ ॥

सहार्थवशादेकस्यानेकसम्बन्धे सहोक्तिः ॥ ४२ ॥

अत्र शाब्देन वृत्तेनार्थस्यैकेनैवान्वितत्वे सहसाकमित्यादिशब्दवशादन्येनापि सम्बन्धो भवति सा सहोक्तिः। इयं च प्रस्तुतयोरप्रस्तुतयोर्वा भवन्ती क्वचित्तुल्य-योगितामूला कुत्रचिदभेदाध्यवसायगर्भा क्वापि कार्यकारणपौर्वापर्यविध्वंसा-त्मिका सम्बन्धेऽसम्बन्धप्राणेति प्रायशोऽतिशयोक्तिमूलत्वमस्याः। विच्छि-त्यन्तरसद्भावात्पृथगलंकारत्वम्। प्रायश्चानेकालंकारबीजमतिशयोक्तिः। क्रमेण यथा—

शनैश्छनैर्मानवतीकवोष्णश्वासोर्मिभिः सार्धमवर्धताहः।
निशीथिनी कार्श्यदशां वियोगिजीवाशया सार्धमपि प्रपेदे ॥२१२॥

अत्र मानिनीश्वासवदह्नो वृद्धिरिति तुल्ययोगितागर्भत्वम्। द्वितीयार्धे जीवाशाया गुणत्वेन कार्श्यासम्भवादध्यवसायमूलता। यथा वा—

णवरं चलिए चन्दम्मि णहप्पहे मसणकिरणकन्तिल्ले।
कमलवणाइ णिमीलन्ति सह रहङ्गाण सक्खेहि ॥२१३॥

[ नवरं चलिते चन्द्रे नभःपथे मसृणकिरणकान्तिमति।
कमलवनानि निमीलन्ति सह रथाङ्गानां सौख्यैः ॥ ]

अत्र कमलसङ्कोचः सुखान्तरायश्च निमीलनगिरा अभेदेनाध्यवसितौ।

उत्क्षिप्तं सह कौशिकस्य पुलकैस्सार्धं मुखैर्नामितं
भूपानां जनकस्य संशयधिया साकं समास्फालितम्।
वैदेह्या मनसा समं तदधुनाकृष्टं ततो भार्गव-
प्रौढाहंकृतिकन्दलेन च समं तद्भग्नमैशं धनुः ॥ २१४ ॥

अत्र धनुरुत्क्षेपः कारणं पुलकोत्क्षेपः कार्यं च तुल्यकालतयोपनिबद्धम्। एवं नामितमित्यादि ज्ञेयम्। इह तु—

सह दिअहणिसाइं दीहरा सासदण्डा
सह मणिवलएहिं वाहधारा गलन्ति ।
तुह सुहअ विओए तीअ उव्विग्गिरीए
सह अ तणुलदाए दुव्वला जीविदासा ॥२१५॥

[ सह दिवसनिशाभिः दीर्घा श्वासदण्डाः
सह मणिवलयैः बाष्पधारा गलन्ति ।
तव सुभग वियोगे तस्या उद्विग्नायाः
सह तनुलतया दुर्बला जीविताशा ॥ ]

अत्र त्वया विना तस्या अशोभनावस्थोत्पन्नेति विनोक्त्या सह सङ्कीर्णता ॥४२॥

## विशेषणानां साम्यादप्रस्तुतधर्मावच्छेदः समासोक्तिः ॥४३॥

समानविशेषणमहिम्ना यत्र प्रस्तुतस्यार्थस्याप्रस्तुतगतगुणक्रियादिरूपधर्मावच्छेदः प्रतीयते सा समासोक्तिः । ततश्चाप्रस्तुतव्यवहारसमारोपः । न रूपसमारोपः । इयं च विशेषणानां श्लिष्टतया साधारण्येनौपम्यगर्भत्वेन च शुद्धा त्रिधा । सङ्कीर्णा तु चतुर्धेति सप्तविधाप्यलौकिके लौकिकस्य शास्त्रीयेऽशास्त्रीयस्य लौकिके वा शास्त्रीयस्य शास्त्रीये वा लौकिकस्य व्यवहारस्य समारोपाच्चतुर्धा । तत्रापि लोकस्य स्थावरजङ्गमात्मनोऽनन्तत्वाच्छास्त्राणां चेत्यानन्त्यमस्याः । दिङ्मात्रं यथा ।

परिपिञ्जरितासिताम्बरैर्निविडैः कं न हरन्ति हारिभिः ।
अयि सायमिमाः पयोधरैः स्फुटरागाच्चलतारका दिशः ॥२१६॥

अत्र श्लिष्टविशेषणवशाद्दिशां प्रमदात्वप्रतिपत्तिः ।

विलिखति कुचावुच्चैर्गाढं करोति कचग्रहं
लिखति ललिते वक्त्रे पत्रावलीमसमञ्जसाम् ।
क्षितिप खदिरः श्रोणीबिम्बाद्विकर्षति चाम्बरं
मरुभुवि हठान्नश्यन्तीनां तवारिमृगीदृशाम् ॥२१७॥

अत्र विलिखतीत्यादिसाधारणविशेषणबलात्खदिरस्य हठकामुकत्वावगतिः। नन्वेवमादावाख्यातार्थस्य विशेषणत्वायोगात् कथं विशेषणसाम्यादिति लक्षणानुगमः। असदेतत्। तथाहि स्वरूपमात्रेणावगतस्य वस्तुनो यत्सम्बन्धबलेन वैशिष्ट्यमवगम्यते तद्विशेषणम्। तच्च द्विविधं सिद्धं साध्यं च। प्रत्येकं च सामानाधिकरण्यवैय्यधिकरण्याभ्यां द्वेधे चतुर्धा। यथा शुक्लः पटः, राज्ञः पुरुषः, पाचको देवदत्तः, पचति यज्ञदत्तः, गम्यते चैत्रेणेति वा। तेन लिखतीत्यादेस्तात्त्विकविशेषणत्वेऽपि यदाहुरेवमादौ कार्यसमारोपे विशेषणसाम्यं यथाकथञ्चिद्योज्यमिति तदपर्यालोचिताभिधानमेव।

आह्लादिचन्द्रवदना स्फुरत्तारकमौक्तिका।
घनान्धकारधम्मिल्ला राजते गगनस्थली॥२१८॥

अत्र चन्द्रो वदनमेवेति कृते गगनस्थलीपक्षे समासे कामिनीपक्षे तु आह्लादिचन्द्रसदृशं वदनं यस्या इति समासे औपम्यगर्भस्य विशेषणस्य साम्यम्। एवं स्फुरदित्यादि ज्ञेयम्। एवमौपम्यगर्भविशेषणसाम्याद्ग-गनस्थल्याः कामिनीत्वप्रतीतिः। न चात्रोपमारूपकसन्देहसङ्कराशङ्का कार्या तस्य निरसिष्यमाणत्वात्।

मज्जतः पयसि पश्चिमसिंधोः स्निग्धमम्बरमलं परिरभ्य।
भास्वतस्तुषविमुक्तमसूरक्षोदपाटलमलक्ष्यत धाम॥२१९॥

अत्राम्बरमलमित्यादि श्लिष्टम्। मज्जत इत्यादिसाधारणविशेषणवशा-द्भास्वतः स्नानप्रवृत्तमलिनपुरुषत्वप्रतीतिः। एतेषु लौकिके लौकिकव्यवहार-समारोपः। यथा च—

सरलं सहवासरश्रिया निभृतं क्वापि गतः स भास्करः।
वद तेन विनाब्जिनी कथं क्षणदामत्र नताङ्गि नेष्यति॥ २२० ॥

अत्र भास्कराब्जिन्यादेर्नायकत्वप्रतीत्यालौकिके लौकिकवस्तुव्यवहार-समारोपः।

---

१. क्षणदासेय नताङ्गि नेष्यति।

महाविभूतिप्रणवश्चतुर्धा भिन्नोऽप्यभिन्नः श्रुतिवाक्यसङ्घैः ।
हृदि स्फुरत्प्रेरकतां जनानां व्रजन्नियोगोऽत्र परं प्रमाणम् ॥२२१॥

अत्र मीमांसाशास्त्रप्रसिद्धे वस्तुनि वैष्णवागमप्रसिद्धभगवद्वासुदेवादिव्यवहारसमारोपः ।

सत्पक्षसङ्गतिरुपोढसपक्षसत्त्वो
दूरीकृताखिलविपक्षगतिर्नरेन्द्र ।
बाधोज्झितस्वविषयः प्रतिपक्षहीनः
साध्यं विधेहि विदुषां धृतसाधुवादः ॥२२२॥

अत्र लौकिके नैय्यायिकादिप्रसिद्धपञ्चलक्षणकहेतुव्यवहारारोपः ।

इति रतिसमयोपदेशयुक्त्या रतगुरुदर्शितया पुरंध्रिलोकः ।
निजपरपरभागवृत्तिमौञ्झीत्स्मरपरमाद्वयभूमिकानिलीनः ॥२२३॥

अत्राम्नायप्रसिद्धवस्तुधर्मसमारोपः ।

बहिर्भावप्रेक्षा बहुविधविकल्पा परिगल-
द्विकल्पौघा चात्मस्थितिरिति ममोभे प्रियतमे ।
प्रसाद्या चेदेका प्रसरति परा तत्कुरु तथा
यथा द्वे आसाते समसमयलब्धप्रथमिमे ॥२२४॥

अत्रागमशास्त्रप्रसिद्धे वस्तुनि लौकिकव्यवहारसमारोपः । अन्यस्त्वयमभ्यूह्यम् ।

द्यामालिलिङ्ग मुखमाशु दिशां चुचुम्ब
रुद्धाम्बरां शशिकलामलिखत्कराग्रैः ।
अन्तर्निमग्नचरपुष्पशरोऽतितापात्
किं किं चकार तरुणो न यदीक्षणाग्निः ॥२२५॥

इति । तथा—

यैरेकरूपमखिलास्वपि वृत्तिषु त्वां
पश्यद्भिरव्ययमसंख्यतया प्रवृत्तम् ।

लोपः कृतः किल परत्वजुषो विभक्ते-
स्तैर्लक्षणं तव कृतं ध्रुवमेव मन्ये ॥२२६॥

इत्यादौ विशेष्यस्यापि साम्यादप्रस्तुतस्य धर्मिणोऽपि गम्यत्वात्समासोक्तिर्न वाच्या। तथा हि अत्र विशेषणमात्रसाम्यादप्रस्तुतवस्तुसम्बन्धिनो धर्मा एव प्रतीयन्ते न तु धर्म्यपि। धर्मिणोऽपि प्रतीतौ रूपसमारोपाद्रूपकमतिशयोक्तिर्वा स्यात्, न तु समासोक्तिरत एव नाप्रस्तुतस्य गम्यत्वमपि तु तद्धर्माणामेव। तेनाप्रस्तुतस्य गम्यत्वमित्यादि अलक्षणमेव। तैश्च धर्मैः प्रस्तुतस्य धर्मिणो-वच्छेदप्रतीतिः सा समासोक्तिरिह तु तरुण इति अव्ययमित्यादिप्रस्तुत-विशेषणप्रतिपादकादप्रस्तुतस्य धर्मिणोऽपि प्रतीतिस्तस्य च पृथगुपादानेन सामानाधिकरण्याच्छब्दशक्तिमूलो रूपकध्वनिरेवेति युक्तम्। तेनैवमादीनि विशेषणपदस्याप्रस्तुतविशेष्यप्रतिपादकत्वे ध्वनेरुदाहरणानि। एकस्यैव पदस्य प्रस्तुताप्रस्तुतविशेष्यप्रत्यायकत्वे ध्वनिर्निदर्शयिष्यते। तेन—

प्रकृतस्याथवाऽन्यस्य विशेषस्याभिधायकम्।
समानं यत्र नो तत्र समासोक्तिर्ध्वनिर्हि सः॥
विशेषणानां तुल्यत्वे विशेष्याणामपि क्वचित्।
अनेकार्थाभिधायित्वे श्लेषः स्यादिति निर्णयः॥

सीमानं न जगाम यन्नयनयोर्नान्येन यत्सङ्गतं
न स्पृष्टं वचसा कदाचिदपि यद्दृष्टोपमानं न यत्।
अर्थादापतितं न यत्र च न यत्तार्किचिदेणीदृशां
लावण्यं जयति प्रमाणरहितं चेतश्चमत्कारकृत् ॥२२७॥

इत्यत्र न मीमांसाशास्त्रप्रसिद्धवस्तुव्यवहारसमारोपः। न हि तत्र प्रमाणशङ्कागोचरं वस्तु चर्चितम्। अपि तु षट् प्रमाणानि चर्चितानि। न चात्र प्रमाणव्यवहारसमारोपः। लावण्यं प्रत्यक्षादीनि प्रमाणानीत्थप्रतीतेः। तस्मिन्सर्वप्रमाणागोचरस्य विवक्षितत्वाच्च। तेनात्र निखिलप्रमाणाऽगोचरोप-निषदादिप्रसिद्धपरमात्मतत्त्वव्यवहारसमारोप इति व्याख्येयम्। एवमन्ये-

पूदाहरणेष्वलंकारान्तरेषु चासमीचीनतास्त्येव ग्रन्थगौरवभयात्तु न प्रकाश्यते इति स्वयमेव तत्र तत्राभ्यूह्यम् ॥ ४३ ॥

## विशेष्यस्यापि साम्ये द्वयोर्वाच्यत्वे श्लेषः ॥ ४४ ॥

विशेषणानां साम्यादिति चानुषक्तम्। इह प्रस्तुताप्रस्तुतयोः क्वचिद्वाच्यत्वं क्वचिदेकस्य वाच्यत्वमपरस्य गम्यत्वम्। तत्र यदा विशेषणविशेष्यप्रतिपादकयोर्द्वयोरपि साम्यं तत्रापि यदि द्वावप्यर्थौ प्रस्तुतावप्रस्तुतौ वा तदा तुल्यन्यायत्वाद्द्वयोरपि वाच्यत्वे श्लेषः। यदा तु विशेष्यविशेषणसाम्येऽपि कस्यचित्प्रस्तुतत्वमपरस्यान्यता तदार्थप्रकारणादिनाभिधानियन्त्रणेन प्रस्तुतस्यैव वाच्यत्वादप्रस्तुतस्य गम्यत्वे शब्दशक्तिमूलो ध्वनिः। यत्र पुनर्विशेषणानामेव साम्यं तत्रापि प्रस्तुतस्यैवोपादाने समासोक्तिः। अप्रस्तुतस्योपादानेऽप्रस्तुतप्रशंसा। द्वयोरप्युपादाने श्लेष एव। तेन द्वयोरपि तुल्यकक्ष्यतया प्रस्तुताप्रस्तुताद्वा विशेष्यप्रतिपादकशब्दसाम्येन वाच्यत्वे विशेषणानामेव वा साम्ये द्वयोरपि वा पृथगुपादाने श्लेषालङ्कारः। यत्र तु प्रस्तुताप्रस्तुतयोरतुल्यकक्ष्ययोर्विशेष्यस्यापि साम्यं तत्रापि ध्वनिरेव। अस्य चोपमाद्यलंकारान्तराभावेऽपि यत्र द्वयो' प्रकृतत्वमप्रकृतत्वं वा तत्र तुल्ययोगिता, यत्र त्वेकस्य प्रकृतत्वं तत्र दीपकमवश्यंभावीत्यलङ्कारान्तरविविक्तविषयत्वाभावान्निरवकाशत्वेन तद्बाधकत्वात्तत्प्रतिभोत्पत्तिहेतुत्वमेवेति न वाच्यम्। "येन ध्वस्तमनोभवेने"त्यादौ यत्र प्रकृतयोरप्रकृतयोर्वा विशेष्ययोरसकृदुपादान तत्र तुल्ययोगितायाः अभावात्। तथा हि धर्मस्य साधारण्येन सकृदुपादाने तुल्ययोगिता। तच्च पृथगुपात्ततया भेदेन प्रतीतयोरुपमानोपमेययोर्धर्मिणोरेकस्मिन्वाक्ये भवति न सकृदुपात्तयोः। सकृदुपादाने हि भेदप्रतीत्यभावात्कः कस्य साधारण' स्यात्। अस्त्वेव "त्वां सर्वदो माधव" इत्यादेः शब्दस्यावृत्तौ असकृदुपादानाद्भेदप्रतीतिरिति चेत्। तर्हि धर्मिप्रतिपादकावृत्तिवद्येन ध्वस्तमित्यादिधर्मवाचकस्याप्यावृत्त्या सकृदुपादानाभावान्न तुल्ययोगिता। भवेत्तर्हि धर्मस्यासकृदुपादानात्प्रतिवस्तूपमया हृतविषयः

श्लेष इति चेत् न। तत्र ह्येकस्मिन्वाक्येऽवान्तरवाक्ययोरुदीरितयोरन्वितत्वेन प्रतिपत्तेः इह च तदभावात्। न हि माधववाक्यार्थपरामर्शवेलायाममुमाधव-वाक्यार्थपरामर्शोऽस्ति निरपेक्षत्वात्तयोः। तस्मादेवमादौ अलंकारान्तरविविक्त-विषयत्वान्न निरवकाशः श्लेषः। क्वचित्तु "सकलकलं पुरमेतज्जातं सम्प्रति सुधांशुबिम्बमिव"त्यादौ शब्दमात्रसाम्येन समानधर्माभावादुपमादेः प्रतिभामात्रेणावस्थाने तत्प्रतिभोत्पत्तिहेतुः। क्वापि "अमृतेन्दुकलासहोदरे"त्या-दाविन्दुकलासहोदरत्वाख्यसाधारणधर्मबलेन स्वलक्षणानुसारेण प्रतिष्ठितस्यो-पमादेः पर्यवसाने "वनमालाभरणे"त्यादिश्लेषोऽङ्गम्। कुत्रचित्तु "सन्निहित-बालान्धकारा भास्वन्मूर्तिश्च"त्यादौ विरोधेऽङ्गमेव न तु तत्प्रतिभोत्पत्तिहेतुः। प्रातिभत्वादेव सर्वत्र विरोधस्य प्रत्युतार्थद्वयस्य पार्यवसानिकत्वाभावादेव-मादौ श्लेषस्यैव प्रातिभत्वम्। "परिपिञ्जरिता सिताम्बरे"त्यादौ समा-सोक्त्यादेरनुप्राणकत्वं नाङ्गता। श्लेषव्यतिरेकेणैवमादौ समासोक्त्यभेदस्यात्म-लाभाभावात्। एवं च—

प्रधानभूतालंकारवियोगात्सावकाशता।
कुत्रचित्प्रतिभोत्पत्तिहेतुत्वं क्वचिदङ्गता॥
क्वचित्प्ररोहविरहात्प्रातिभत्वं परत्र च।
अनुप्राणकतास्येति श्लेषोऽयं पञ्चभूमिकः॥ इति॥

अयं च प्रस्तुतयोर्विशेष्यद्वयप्रतिपादकस्य शब्दस्यैकत्वेन साम्ये तथा-विधयोर्द्वयोरपि साम्ये एकतरस्य विशेषणानामेव वेति चतुर्धा। एवमप्रस्तुतयो-रपीत्यष्टधा। प्रस्तुताप्रस्तुतयोस्तु प्रस्तुतविशेष्यप्रतिपादकस्योभयोर्वा विशेष-णानामेव वा साम्ये चेति चतुर्धैवेति द्वादशविधः। क्रमेण यथा—

आसन्नामरवाहिनीसहचरः सम्भावयन्कृत्तिका-
श्लक्ष्णच्चित्रशिखण्डिपृष्ठनिपतत्पादः सुरावर्जितः।
कुर्वन्त्या क्षणदानवाभिभवनं शक्त्या समासेवितः
पायान्निर्जिततारकः स्वमहसा सत्वात्रिनेत्रोद्भवः॥२२८॥

अत्र सत्वात्रिनेत्रोद्भव इति कुमारचन्द्रमसोर्द्वयोरपि रक्षणक्षमत्वात्प्रकृतयो-र्विशेष्ययोरभिधायकस्यापि साम्यम्।

घनतिमिरविरोधकं ससारं सकलकलं च सुधाकरं निरीक्ष्य ।
सुतमतिमसमेपनाकलम्राश्चिरमुदितो मकरालयश्चकास्ति ॥२२९॥

अत्र मकरालयसुधाकरशब्दयोर्विशेष्ययोः पृथगुपात्तयोः साम्यं द्वयोरपि प्रकृतत्वाद्वाच्यत्वम् ।

रक्ताशयस्य गुणिनस्सहसा तथान्त-
रासेदुपः स्थितिमतिस्फुटमित्रशक्तेः ।
मालिन्यदैन्यमधुना विदधाति कष्टं
दोषाकरस्य भवतश्च खलोदयोऽयम् ॥२३०॥

अत्र प्रदोषवर्णने खलस्य सम्बोध्यत्वेन खलदोषाकरयोः प्रकृतयोरन्यतर-विशेष्यप्रतिपादकस्य दोषाकरत्वस्य साम्यम् ।

संजातपत्रप्रकराश्चितानि समुद्वहन्ति स्फुटपाटलत्वम् ।
विकस्वराण्यर्ककरप्रभावाद्दिनानि पद्मानि च वृद्धिमीयुः ॥२३१॥

अत्र ऋतुवर्णने दिनपद्मयोः प्रस्तुतयोः प्रस्तुतयोर्विशेषणानामेव साम्यम् ।

अत्रामृतं किमपि यत्सततप्रियं मे
स्यन्देत जात्वधिधरित्रि तरोर्मुखे तत् ।
यत्रेति चिन्तितवताच्युतसोदरेण
द्राक्षासु कार्ष्ण्यमिषतोऽम्बरमास्तृतं तत् ॥२३२॥

अत्र द्राक्षाया वर्णनीयत्वेनाप्रस्तुतयोः शक्रहलधरयोर्विशेष्ययोरच्युत-सोदरेणेत्येकमेव प्रतिपादकमित्यप्रकृतयोर्विशेष्यस्यापि साम्यम् ।

सअसोअरोवि ण समो विमलस्स मुहस्स फुडसुहासो वि ।
मम वल्लहाए तीए कमलं तह पुण्णरअणिअरो व्वि ॥ २३३ ॥
[ सरसोदरोऽपि न समः विमलस्य मुखस्य स्फुटसुहासोऽपि ।
मम वल्लभायास्तस्याः कमलं तथा पूर्णरजनिकरोऽपि ॥ ]

अत्र मुखस्य प्रस्तुतेनाप्रस्तुतयोः कमलरजनिकरयोर्वाचकौ कमलो यस्य पूर्णो रजनिकरो यस्येत्यर्थावलम्बनेन द्वावपि समानौ ।

विअडपअबन्धबन्धवसिरिणा तुह मित्तचित्तविहवस्स।
रण्णो वि गइ गुरुइ सारिसी रअणाअरेण इमा ॥ २३४ ॥
[ विकटपदवंधबांधवश्रिया ( विकटपयोवन्धवान्धवश्रिया
वा ) तव मित्राचित्तविभवस्य ।
राज्ञोऽपि गतिर्गुर्वी सदृशी रत्नाकरेण ( रतनागरेण वा ) एषा ॥ ]

अत्र विभवोपमानतयोपात्तयो राजगुरुयोरप्रस्तुतयो (?) रतनागरेणेत्यर्थाश्रयेण नरअणाअरेणेति एकमेव वाचकं समानम् ।

सन्तः सन्तोषवन्तोऽपि परोपद्रवभाजनम् ।
वनस्थितौ पद्ममृगावायास्येते शिलीमुखैः ॥२३५॥

अत्र सतामुपमानत्वेनोपात्तयोः पद्ममृगयोः पृथगुपात्तत्वाद्विशेषणानामेव साम्यम् ।

अत्रान्तरे समायान्ती ददृशे दूरतस्तया ।
नरेन्द्रसवितुस्तस्य पुरः सन्ध्येव पाटला ॥२३६॥

अत्र पाटलेति प्रकृतविशेषप्रतिपादकमप्यप्रकृतसन्ध्याविशेषणत्वेनोपात्तम् ।

दशा दिनस्य तीव्रेयं यदयं भगवान् रविः ।
कृष्णस्योरसि पुष्णाति नभसः कौस्तुभश्रियम् ॥२३७॥

अत्र कृष्णस्येत्यप्रकृतवासुदेवप्रतिपादकत्वेऽपि नभोविशेषणत्वेनापि गतिः ।

अस्ति प्रथापरमदैन्यसुखासनाभि—
रसूतं गजाननगुहावासिताधिविन्ध्यम् ।
लीलावतीति नगरी कलितापदाना
दुर्गेति भावितरणा हरिणाङ्कनेन ॥२३८॥

अत्र लीलावत्या दुर्गायाश्च प्रस्तुताप्रस्तुतयोर्विशेष्ययोरपि प्रतिपादकसमानत्वम् ।

दुर्गेति सर्वत्र गता प्रसिद्धिं नगेन्द्रकन्येव सनीलकण्ठा ।
या लम्भकाञ्चीविषये न कान्ति सिंहासनेनातितरां बिभर्ति ॥२३९॥

अत्र प्रकृताप्रकृतयोः पृथगुपात्तयोः विशेषणानामेव साम्यम् । विशेष्यद्वयप्रतिपादकस्यैकत्वे प्रस्तुतस्यैव वाच्यत्वे तु ध्वनिर्यथा ।

लङ्कालआणँ पुत्तअ वसन्तमासेक्कलद्धपसराणं।
आपीअलोहिआणं बीहेइ जणो पलासाणं ॥२४०॥

[ लङ्कालयानां पुत्रक वसन्तमासे लब्धप्रसराणाम्।
आपीतलोहितानां बिभेति जनः पलाशानाम् ॥ ]

अत्र तरूणां वाच्यत्वं प्रस्तुतानां निशाचराणां व्यङ्गयत्वम्। यथा चात्र तरूणां निशाचरत्वाध्यवसायस्य प्रतीयमानत्वादतिशयोक्तेर्व्यङ्गयत्वं नोपमायाः शब्दशक्त्या तत्प्रतीतेरभावात्तथोक्तमन्यत्र। "येरेकरूपमसि" इत्यादौ स्वप्रकृतविशेष्यप्रतिपादकत्वाद्ययादिपदस्याप्रकृतभगवत्परामर्शकेन त्वामित्यनेन सामानाधिकरण्यनिर्देशाद्रूपकध्वनिः। प्रस्तुताप्रस्तुतविशेष्यद्वयप्रतिपादकयोर्द्वयोरपि साम्ये ध्वनिरेव। यथा—

भूपां भोगैरहीनां दधदजवृषगो दक्सखेनार्चिषा यः
कालं ध्वान्तं विधुन्वन्नयनविषमतां दर्शयन्नुत्तमायाः।
पुष्णन्धामाप्र्यमाशाम्बरगतिरतनोत्तारकाक्षेपचारं
भास्वानीशः स्वमूर्तिं प्रकटयतु निजां काञ्चनोमां सभूतिम् २४१

अत्र भास्वतः स्तूयमानत्वेन प्रस्तुतस्येशस्य चाप्रस्तुतस्य भास्वानीश इति च वाचकौ परस्परविशेषणत्वेनोपात्ताविति पूर्ववद्रूपकध्वनिरेव। क्वचित्तु प्रस्तुतयोरतुल्यकक्ष्यत्वेनैकस्य वाच्यत्वेऽन्यस्य व्यङ्गयत्वे ध्वनिरेव। यथा—

नृप ग्रहीतुं न यमत्र कोऽप्यलं सुरेषु वा पन्नगपुङ्गवेषु वा।
स एष पङ्केरुहकर्णिकामृदुस्त्वयाशयोऽस्याः क्रियते सकौतुकः २४२

अत्राशयस्य तदानीं प्रस्तुतत्वेनाभिधातुमिष्टस्य वाच्यत्वं शयशब्दवाच्यस्य पाणेर्भाविस्वेन प्रस्तुतत्वेऽपि सूचनीयत्वेन साक्षाद्वक्तुं अनिष्टत्वादतुल्यकक्ष्यत्वे व्यङ्गत्वमेव। अत्र च भिन्नप्रयत्नोच्चार्याणामपि शब्दानां तुल्यरूपत्वेनाभिन्नप्रयत्नोच्चार्यत्वमिव यदा तदा जतुकाष्ठवच्छब्दयोः श्लिष्टत्वाच्छब्दश्लेषः। यदा त्वेकरूपस्यैव शब्दस्यानेकार्थप्रतिपादकत्वं तदैकस्मिन् शब्दे अर्थयोरेकवृन्तगतफलद्वयवच्छ्लिष्टत्वादर्थश्लेषः ॥ ४४ ॥

## साभिप्रायत्वं परिकरः ॥ ४५ ॥

विशेषणानामित्यनुपज्यते। विशेषणानां साभिप्रायत्वं प्रतीयमानार्थगर्भता परिकरः। तस्य च प्रतीयमानस्य वाच्यं प्रत्युपस्कारकत्वादुगुणीभूतत्वेनालङ्कार्यत्वाभावादलङ्कारता। वाच्यस्यैवोपस्कार्यत्वेन प्राधान्यादलङ्कार्यता। यत्र तु वाच्यस्य व्यङ्ग्यार्थपर्यवसायितया व्यङ्ग्यस्य प्राधान्यं न व्यङ्ग्यगर्भता स ध्वनेर्विषयः।

कर्ता द्यूतच्छलानां जतुमयशरणोद्दीपनस्सोऽभिमानी
कृष्णाकेशोत्तरीयव्यपनयनपटुः पाण्डवाः यस्य दासाः।
राजा दुःशासनादेर्गुरुरनुजशतस्याङ्गराजस्य मित्रं
क्वास्ते दुर्योधनोऽसौ कथय न तु रुषा द्रष्टुमभ्यागतौ स्वः २४२

अत्र रुषा नागतावपि तु द्रष्टुमागताविति मुख्यार्थबाधादुपहासो लक्ष्यः। अत्र च दुर्योधनस्यायुक्तकारितयोपहास्यत्वे भीमार्जुनयोः तत्कारित्वं च वाच्य एव द्यूतच्छलकारित्वादिहेतुतया उपात्तः। तस्य च वाच्यस्य द्यूतच्छलादिकरणेन पाण्डवानपास्य दासभावं चापाद्यास्माकमेव जगती भविष्यतीति युष्माभिश्चिन्तीतम्। तदिदानी सर्वमस्माभिश्छलादिपरिहारेण केवलेन बाहुबलेन विपरीतं संपादितं संपादयिष्यते चेत्यादिना व्यङ्ग्येन तदागूरितेन हेतुत्वमुपोद्बोध्यते इति वाच्योपस्कारकत्वेन व्यङ्ग्यस्य गुणीभावाद्ध्वन्यङ्गत्वाभावे परिकरालङ्कारः। यत्तूक्तम्—व्यङ्ग्यस्य स्फुटतया वाच्यायमानत्वेन गुणीभावाद् ध्वनित्वाभाव इति तदसमीचीनम्। न हि स्फुटतया प्रतिपत्तौ व्यङ्ग्यस्य कश्चिद्विशेषः येन तस्य गुणीभावः स्यात्। अपि तु प्रमातुः। नापि प्रमातरि नियतः, प्रज्ञातिशयवतां ध्वनावपि व्यङ्ग्यस्य स्फुटत्वेनावभासनात् तदन्येषामेवमादावप्यस्फुटत्वेन प्रतीतेः मन्दानामुभयत्रापि च तदनवगमाच्च। अपि च न गुणीभावो वस्तुनः स्वाभाविकः प्रधानरूपार्थान्तरसापेक्षत्वेनौपाधिकत्वात्। य एव स्वगृहे प्रधानः तस्यैवाचार्यसन्निधावप्रधानत्वम्। न चात्र प्राधान्यं कस्यचिदवगच्छामः। किं वाच्यस्य व्यङ्ग्यान्तरस्य वा। नाद्यो यदि वाच्योपस्कारकत्वात्तु गुणीभावः तर्हि वाच्याङ्गत्वादेव तत्सिद्धौ स्फुटत्वेन प्रतिपत्तेरप्रयोजकत्वम्। अथ वाच्यापेक्षया व्यङ्ग्यस्य चमत्कार-

कारित्वाभावात्तदसुन्दराख्ये गुणीभूतव्यङ्ग्यभेदेऽन्तर्भावात्किं स्फुटत्वरूपदोषोद्भावेन। न द्वितीयो व्यङ्ग्यान्तराङ्गत्वेऽन्याङ्गत्वादेव गुणत्वसिद्धेः।

कस्यापि गूढप्रतिपत्तिररस्ति यत्रैव तत्रैव परस्य न स्यात्।
धीभेदतस्तेन निगूढतायां ध्वनिः स्फुटत्वे तु न वेति वाच्यम्॥

ऋते प्रधानं न भवेद्गुणत्वं वाच्यं प्रधानं यदि तत्कृतः स्यात्।
सौन्दर्ययोगातिशयेन किं वा व्यङ्ग्येन साक्षादुपबृंहणाद्वा॥

व्यङ्ग्यस्य सौन्दर्यविशेषहानेरन्याङ्गभावाद्यदि वा गुणत्वम्।
तदेव वाच्यं न पुनः स्फुटत्वं नरान्तरादौ तदनिश्चयेन॥

इति संक्षेपः। तस्मात्प्रसन्नगम्भीरपादरूपागूढाख्यगुणीभूतव्यङ्ग्यभेदस्याभाव एवेति किंबहुना। यथा च गुणीभूतव्यङ्ग्यस्य भेदा न सम्भवन्ति तथोक्तमन्यत्रेति तत एवावधार्यम्॥ ४५॥

## सापेक्षत्वादुपादानेनान्यप्रतीतिर्भङ्ग्यन्तरेण वाभिधानं पर्यायोक्तम्॥ ४६॥

इहाभिधेयस्यार्थान्तरावगमकत्वे द्वयी गतिः। सापेक्षत्वं निरपेक्षत्वं वा। तत्रार्थान्तरनिरपेक्षत्वे ध्वनिः। सापेक्षत्वे तु कुन्ताः प्रविशन्तीतिवदर्थप्रतीतिर्लक्षणया न तु व्यञ्जनेन उपादानलक्षणाया अस्तमयप्रसङ्गात्। तेनैवमादौ लक्ष्यत्वेनार्थान्तरस्य व्यङ्ग्यत्वाभावात् गुणीभूतव्यङ्ग्यभेदत्वं न वाच्यम्।

मुख्यार्थमाकांक्षतया प्रतीतिराक्षेपतोऽर्थस्य हि लक्षणैव।
व्यङ्ग्यत्वगन्धोऽपि न विद्यतेऽत्र ध्वनित्वशङ्कापि न तेन कार्या॥

इति संक्षेपः।

तेनोपादानात्मकलक्षणाभेदेनात्मनः सापेक्षतापरिहारायार्थेनार्थान्तरं यदाक्षिप्यते तदैकं पर्यायोक्तम्। यद्यप्युपादानलक्षणायां लक्षकस्य सापेक्षत्वमेव तथाप्युपादानावलम्बनेन परिकरादौ व्यञ्जनस्याप्रस्तुतप्रशंसाभेदेषु च लक्षणायास्सम्भवात्तद्व्युदासार्थं सापेक्षत्वादिति कृतम्। न हि यथेह तथा

तत्राप्रस्तुतस्य साकांक्षत्वमस्ति। स्वसिद्ध्यर्थतयाक्षेपो यत्र वस्त्वन्तरस्य तदुपादानम्। यत्र च वाच्यस्यैवार्थस्य विदग्धभणितिरूपेण विच्छित्यन्तरेण कथनं तद्द्वितीयं पर्यायोक्तम्। उदाहरणम्—

स्तनयुगमश्रुस्नातं समीपतरवर्ति हृदयशोकाग्नेः।
चरति विमुक्ताहारव्रतमिव भवतो रिपुस्त्रीणाम् ॥ २४४ ॥

अत्र रिपुस्त्रीणां स्तनयुगस्यावस्थाविशेषवर्णनेन साकांक्षेण शोकोपनिबन्धः सहितेन स्वसिद्ध्यर्थं तत्कामुकवधः कारणभूत आक्षिप्यते।

यस्मिञ्जातु न जायतेऽम्बुजवतीकौमारधर्मक्षति-
र्दृष्टो यत्र न वा कदाचिदशनाभिज्ञश्चकोरीजनः।
तस्मिन्नप्यहिचक्रवर्तिनगरोद्देशोपकण्ठे क्षणं
यन्मूलस्फुटिकाश्मरश्मिनिवहैः कोऽपि प्रसादोदयः ॥ २४५ ॥

अत्रार्केन्द्वोः कारणरूपयोः पाताल अभावः प्रतीयते। आद्ये शोकादेः कार्यस्य रिपुवधस्य कारणस्य चेति द्वयोरपि प्रस्तुतत्वात्, द्वितीयस्मिंश्च कलासस्य वर्णनीयत्वेन द्वयोरपि गम्यगमकयोरप्रस्तुतत्वात् अप्रस्तुतप्रशंसातो भेदः। द्वितीयं यथा—

स्वभ्यस्तदुर्नयजयस्तनयस्तदीयः
क्ष्मासाररक्षजयवाहननामधेयः।
दुर्वारवैरिवरवीरविलासिनीनां
स्वप्नावशेषमकरोत्प्रियदर्शनं यः ॥ २४६ ॥

अत्र बहुधाजयदिति प्रियदर्शनाभावश्च भङ्गयन्तरेणोक्तौ।

वत्सरैः कतिपयैरमत्सरः सोऽप्सरोनयनसम्भृतोत्सवः।
पालितप्रकृतिमात्रपुत्रको नाकलोकतिलकत्वमाययौ ॥ २४७ ॥

अत्रापुत्रो प्रतीत इति भङ्ग्यन्तरेणोक्तम्। क्वचिदुपचारगर्भेण भङ्गयन्तरेण यथा—

यं वीक्ष्य चिररूढापि निवासप्रीतिरुज्झिता ।
मदेनैरावणमुखे मानेन हृदये हरेः ॥ २४८ ॥

अत्रेन्द्रतद्गजौ मानमदमुक्तौ जाताविति भङ्गयन्तरेण कथितम् । मानमदयो-श्चाचेतनत्वेन प्रतीत्यभावादुपचारगर्भत्वमेव । एवमन्यत्रावसेयम् ॥ ४६ ॥

## विहितस्याशंकितस्य वा विशेषागमाय निषेधो निश्चयः ॥ ४७

क्रियया नञा[1] वा विहितस्याशंकितस्य वार्थस्य केनचिन्निमित्तेनायुक्ततय-प्रतिभातस्य निषेधे क्रियमाणे कस्यचिद्विशेषस्य प्रतिपादनार्थादौ भ्रमवशाद-न्यथावभातस्य पश्चादन्यथा निश्चयनं निश्चयः ॥ उदाहरणम्—

देया शिलापट्टकवाटमुद्रा श्रीखण्डशैलस्य दरीगृहेषु ।
वियोगिनीकण्टक एष वायुः कारागृहस्यास्तु चिरादभिज्ञः ॥२४९॥
बाणेन हत्वा मृगमस्य यात्रा निवार्यतां दक्षिणमारुतस्य ।
इत्यर्थनीयः शबराधिराजः श्रीखण्डपृथ्वीधरकन्दरस्थः ॥ २५० ॥
यद्वा मृषा तिष्ठतु दैन्यमेतन्नेच्छन्ति वैरं मरुता किराताः ।
केलिप्रसङ्गे शबराङ्गनानां स हि स्मरग्लानिमपाकरोति ॥ २५१ ॥

अत्र वियोगिनीनां मलयानिलेन खेदितानां कातरतया कवाटमुद्रादे कार्य-तया प्रतिभातस्यापि किरातानां तदनुकूलतया युक्तत्वेन निषेधो मलयानि-लस्याशक्यनिराकरणीयत्वं तासां च यत्किंचन कर्तुमुद्यतानामशरणतया कान्दिशीकत्वमित्यादिविशेषत्वमवगमयति । द्वितीयो यथा—

सतां कदर्थनां व्यर्थं सखे दुर्जन मा कृथाः ।
अथवा नोपदेशेन माधुर्यं भजते विषम् ॥ २५२ ॥

अत्र कदर्थनां मा कृथा इति नञर्थस्य विहितस्यापि अथवेत्यनेन तत्स्व-भावत्वेन दुर्जनस्य निवृत्यशक्यत्वावगमाय निषेधः कृतः । तृतीयो यथा—

तावत्यनन्तसुभटोन्मथने कथं नु साहायकं तव करद्वयमाततान ।
नैवाथवात्र विषयोऽस्ति कुतूहलस्य यत्तेजसा भुवि सहस्रकरोऽभिगीतः ॥

1. नञर्थस्य.

अत्र करद्वयं कथं सहायकमाततानेति शङ्कितस्यार्थस्य नैवेति अनेन निषेधः कृतः। करद्वयस्य च करसहस्रकार्यप्रतिपत्तिर्विशेषप्रतिपत्तिः। न चायमाक्षेपः। तस्य निषेधाभासरूपत्वात्। इह तु निषेधपर्यवसानिकत्वात्। अलंकारान्तरत्वं चास्य विशेषप्रतीतिगर्भीकारेण चमत्कारकारितयाक्षेपादिवदुक्तमेव। अन्यथाक्षेपादेरप्य( न )लंकारत्वप्रसङ्गात्॥ ४७॥

## इष्टनिषेध आक्षेपः॥ ४८॥

विशेषावगमायेत्यनुषङ्गः। उत्तरत्र च। इह निषेधः क्रियमाणो बाधाभावान्निषेध एवेति यथा निश्चये। कदाचित्तु बाधितत्वान्निषेधाभासः। बाधश्चेष्टस्य निषेधानर्हस्य निषेधे सति भवति। तेनेष्टस्योक्तस्य वक्ष्यमाणस्य वा विशेषावगमाय निषेधाभास आक्षेपः। तत्रोक्तविषये क्वचिद्वस्तु निषिध्यते क्वचिद्वस्तुकथनं च। वस्तुनश्चोक्तस्य निषेधो निषेध्यमानतयैवोक्तिरिति त्रयो भेदाः। वक्ष्यमाणविषये च वक्तुमुपक्रान्तस्य समस्तस्योक्तेर्निषेधोऽशस्य वेति द्वाविति पञ्चभेदः। अत्र चोक्तविषये भेदत्रये किमर्थमेतदिति पर्यनुयोगरूप आक्षेपः। वक्ष्यमाणविषये तु भेदद्वये उपादानरूपमागूरणमाक्षेप इति आक्षेपशब्दस्यार्थभेदेन द्वावाक्षेपाविति न वक्तव्यम्। "सुहअ विलम्बसु" इत्यादौ वक्ष्यमाणविषये भणितिनिषेधेऽपि किमर्थं भण्यत इति पर्यनुयोगप्रतीतेरपि सम्भवात्। न चोक्तिनिषेधमात्रेणानुक्तोर्थ आक्षिप्यते। कुन्ताः प्रविशन्तीत्यादौ पुरुषवदनुक्तस्य निषेधमात्रेणाप्रतीतेः। यत्तु प्रतीतिस्तस्या अर्थप्रकरणादिरेव हेतुरन्यथा सर्वत्र विवक्षितस्यार्थस्य न भणामीति निषेधमात्रादेव प्रतीतिप्रसङ्गः। तेनोपादानरूपमागूरणमेव नास्ति। तस्मात्कथमेतदिति पर्यनुयोग एव आक्षेपशब्दार्थः। स च क्वचिदशक्यत्वेन क्वाप्यानर्थक्येन वा भवति। तेनैक एवाक्षेपः पञ्चभेद इति स्थितम्। क्रमेण यथा—

दूरपवासे सँमुहो सि सुहअ आलिंगणं खणं कुरुसु।
अथवा अला हि इमिणा गमणम्मि विलंबआरेण॥ २५४॥

[ दूरप्रवासे सम्मुखोऽसि सुभग आलिङ्गनं क्षणं कुरुष्व।
अथवा अलं एतेन गमनविलम्बकारेण॥ ]

अत्रालिङ्गनरूपस्योक्तस्येष्टस्य वस्तुतो निषेधे बाधितत्वेन निषेधाभासः। अहं तावत्त्वां विना क्षणमपि स्थातुं न क्षमा, त्वं तु मयि निरनुक्रोशक्रूरहृदयो गन्तुं प्रस्तुतः, तत्किमनेन क्षणमात्रविलम्बेनेत्यादिसूचनेन गमनस्य अवश्यापरिहार्यत्वं विशेषमवगमयति । एवं चैवमादौ आलिङ्गनादेर्निषेधेऽप्यन्यविशेषप्रतीतेर्यस्यैव निषेधस्तस्यैव विशेष इत्याद्यसङ्गतम् । अव्यापकत्वात् । अत्र चालिङ्गनस्य विहितस्यापि निषेध आक्षेपसम्भवाद् विहितस्य निषेधो नाक्षेप इति न वाच्यम् । न चात्र निश्चयालंकारः । तत्र निषेधस्य प्ररूढत्वात् । इह त्वामुखावभासनात् ।

विहितेऽर्थे निषेधस्य स्याच्चेदाभासमानता ।
आक्षेपोऽसौ तदा ज्ञेयः प्ररूढत्वे तु निश्चयः ॥

इति संक्षेपः । अत्रोक्तस्य निषेधः । निषिध्यमानतयैवोक्तिः यथा—

उक्तानुक्तदुरुक्तचिन्तनविधौ का योग्यता मादृशां
　भावं ग्रन्थकृतः समग्रमपि वा वेद्मीति नायं मदः ।
किञ्चित्किञ्चिदहं तथापि कथये कुत्रापि कुत्रापि यत्
　सर्वं जीवितमेव तत्कविकुलस्येति प्रतिज्ञैव मे ॥ २५५ ॥

अत्रोक्तादिचिन्तनप्रवृत्तस्यैव तन्निषेधो बाधितत्वेन निषेधाभासो ग्रन्थकृद्वैलक्षण्येन ममैव विचारकुशलत्वमित्यादि विशेषमवगमयति । तथा चैतदेव यत्कथयामि तत्कविकुलस्य जीवितमित्येतेन प्रकटीकृतम् । अत्र च वस्तुनिषेधः ।

दातेत्यर्थकणार्थिता शमयिता शत्रूनिति क्रूरता
वंही यांधन ( ? ) इत्यदातृविषयो विद्वानिति स्वोचितम् ।
अक्षाणां वशेति ( ? ) युक्तमगृहस्थाक्षोर्न्नवोनङ्ग इ–
त्याभासोऽप्यशुभस्य तन्मम विभो न त्वं गिरां गोचरः ॥ २५६ ॥

अत्र दातेत्यादि न वक्तुमुचितमित्युक्तिनिषेधः त्वमेवान्यवैलक्षण्येन दानादिगुणविशिष्ट इत्यादि विशेषनिष्ठः ।

किं भणिमो भण्णइ कित्ति अथ किं वा इमेण भणिएण।
भण्णिहिसि तहवि अहवा भणामि किं वा ण भणिओसि ॥२५७॥
[कि भणाम भण्यते कियदिव किं वा एतेन भणितेन।
भणिष्यसे तथापि अथवा भणामि किं वा न भणितोऽसि ॥]

अत्र भणिष्यसे अथवा भणामि इति सामान्येन प्रतिज्ञातस्य वक्ष्यमाणस्य "किं वा ण भणिओसि" तत्किमथ भण्यसे इत्युक्तिनिषेधात् यदुच्यते तत्तवान्यसक्तत्वादिना निरर्थकमेव भवतीत्यादिप्रतिपादनेन विवक्षितस्याऽवाच्यस्वीकार्यत्वादीति विशेषप्रतीतिः।

समागतप्राणसमा करोति या न ते सपर्याविधिमध्वगाङ्गना।
पुनः प्रियोऽस्याः किमतः परेण वा घन त्वमेवात्र कविर्भवोपरि ॥२५८॥

अत्र पुनः प्रियोऽस्याः इत्यंशोक्तौ न समागमिष्यतीत्यंशान्तरनिषेधः शक्यवचनीयत्वादिविशेषपर्यवसितः ॥ ४८ ॥

## अनिष्टविधानं विध्याभासः ॥ ४९ ॥

यत्र विशेषप्रतीत्यर्थमनिष्टस्यार्थस्य विधानानर्हस्य विधानं बाधितत्वादाभासीभवति स विध्याभासः। न चायमाक्षेपस्य भेद इति वाच्यम्। आक्षेपशब्दार्थस्य पर्यनुयोगस्याभावात्। विधिना निषेधस्योपादानरूपादाक्षेपत्वे कथ्यमाने व्याजस्तुत्यादावपि आक्षेपभेदत्वप्रसङ्गः। तत्रापि निन्दादिना स्तुत्याद्याक्षेपसम्भवात्। किमपरं स यत्र लक्षणायां मुख्यस्य बाधे लक्ष्यप्रतीतौ आक्षेप एव स्यात्। न चैवमादौ निषेधेन विधिप्रतीतिरूपायां विपरीतलक्षणायां उपादानरूपमागूरणमस्ति स्वसिद्ध्यर्थतयार्थान्तरोपादानाभावात् परार्थस्वसमर्पणेनानध्यवसानात्मकत्वाच्च। तेनालंकारान्तरमेव। एवमुत्तरत्रावसातव्यम्।

आक्षिप्यतेऽत्र विधिना न यतो निषेधः
स्वार्थ विधावपि न पर्यनुयोगबुद्धिः।
तस्मादनिष्टविधिरेष विलक्षणत्वात्
नाक्षेपमध्यपतितोऽपि तु भिन्न एव ॥

इति संग्रहः।

पराभिमतार्थानुमननाभासादिना प्रतीतिवैचित्र्याद् विच्छित्तिभेदे विध्याभासाक्षेपादेरतिशयोक्तेः पृथक्त्वम्। तत्र क्वचिच्छुद्धं विधानं क्वापि वरं विषं भक्षय मा चास्य भुङ्क्ष्था गृहे इतिवदनिष्टान्तरनिषेधनं च संसृष्टम्। क्रमेण यथा—

वच्च मह व्विव एक्केइ होन्तु णीसासरोइअव्वाइं ।
मा तुज्झ वि तीअ विणा दक्खिण्णहअस्स जाअन्तु ॥ २५९ ॥
[ व्रज मम एव एकस्याः भवतु निश्श्वासरोदितव्यानि ।
मा तवापि तया विना दाक्षिण्यहतस्य जायन्ते ॥ ]

यथा च—

जइ वच्चसि वच्च तुमं को वा वारेइ तुज्झ गमणस्स ।
तुह गमणं मह मरणं लिहिअपसत्तं कदन्तेण ॥ २६० ॥
[ यदि व्रजसि व्रज त्वं को वा वारयति तव गमनस्य ।
तव गमनं मम मरणं लिखितप्रसक्तं कृतान्तेन ॥ ]

अत्रानिष्टगमनविधानं गमनस्यात्यन्तपरिहार्यत्वादिविशेषप्रत्यायकम्।

आचारापचयं सहे खलु जनस्पर्धानुबन्धं सहे
मर्तव्यव्यसनं सहे गुणिकथाविच्छेददुःखं सहे ।
चिन्तारत्नविकल्पकल्पवपुषः सन्दिग्धसत्तात्मनो
दम्भारम्भमयस्य हन्त भवतो देहीति नाहं सहे ॥ २६१ ॥

अत्राचारापचयादेरनिष्टस्य विधौ देहीत्यनिष्टान्तरस्य निषेधाद् याच्ञाया आचारत्यागादिभ्योऽपि दुष्टतरत्वं प्रतीयते। यथा च—

जाएज्ज वणुद्देसे कुज्जो वि हु णीसहो झडिअपत्तो ।
मा माणुसम्मि लोए ताई रसिओ दरिद्दो अ ॥ २६२ ॥
[ जायतां वनोद्देशे कुब्जो खलु निःशाखः शिथिलपत्रः ।
मा मानुषे लोके त्यागी रसिको दरिद्रश्च ॥ ]

अत्र त्यागिनो दारिद्र्यस्य दुष्टतरत्वप्रतिपादनार्थानिष्टस्यापि जन्मनो विधानम्। क्वचित्पुनरनिष्टस्याप्यभ्युपगममुखेन विधानं दृश्यते यथा—

वरं हुतवहज्वालापञ्जरान्तर्व्यवस्थितिः।
न शौरिसेवाविमुखजनसंवासवैशसम् ॥ २६३ ॥

यथा च—

आभोगिनौ कुण्डलिनौ तत्क्षणोन्मुखकञ्चुकौ।
वरमाशीविषौ स्पृष्टौ न तु तन्व्याः पयोधरौ ॥ २६४ ॥

अनयोरत्यन्तानिष्टस्य ज्वालापञ्जरान्तर्व्यवस्थितत्वादेर्वरमित्यभ्युपगमपूर्वं विधानम्।

सुहअ विलंबसु थोअं जाव इमं विरअकाअरं हिअअं।
संठविऊण भणिस्सं अहवा बोलेसु किं भणिमो ॥ २६५ ॥
[ सुभग विलम्बस्व स्तोकं यावदिदं विरहकातरं हृदयम्।
संस्थाप्य भणिष्याम्यथवापक्राम किं भणामः ॥ ]

अत्र विलम्बस्वेति विहितस्यावस्थानस्येष्टस्य वस्तुनोऽथवेति निषेधाभासाद्व्रजेत्यनिष्टविधानात्किं भणामेति भणितनिषेधाभासाच्चाक्षेपविध्याभासाक्षेपाणां सङ्करः न तु भणितिनिषेधरूप आक्षेप एव ॥ ४९ ॥

## सन्दिह्यमानयोरेकत्र तात्पर्येच्छा सन्देहाभासः ॥५०॥

किमिदं कार्यमुतेदमिति सन्दिह्यमानयोरेकस्यावश्यस्वीकार्यत्वविवक्षायां सन्देहो बाधितत्वाद्विशेषप्रतीत्यर्थं यत्राभासत्वे पर्यवस्यति स सन्देहाभासः। यथा—

मात्सर्यमुत्सार्य विचार्य कार्यमार्याः समर्यादमुदाहरन्तु।
सेव्या नितम्बाः किमु भूधराणामुत स्मरस्मेरविलासिनीनाम् ॥२६६॥

अत्र वीतरागस्य वनकुवननिवास एव कार्यतयावभासते इति भूधराणां नितम्बाः सेव्या उत युवतीनामिति ताटस्थ्येनाभिधानं आर्याणां युवति-

नितम्बपरिहारेण भूधरनितम्बानामवश्यसेवनीयत्वमुचितमिति विशेषप्रतिपादनाय सन्देहाभास । यथा च—

वल्लहदढोवगूहणसुहारसो किं व माणविसजाळा।
करअलधरिअकवोले भण सुन्दरि किं प्पिअं तुज्झ ॥२६७॥

[ वल्लभदृढोपगूहनसुधारसः किंवा मानविषज्वाला।
करतलधृतकपोले भण सुन्दरि किं प्रियं तव ॥ ]

अत्र दूत्या वल्लभदृढोपगूहनस्यावश्यस्वीकार्यत्वविवक्षायां किं प्रियमित्याभासमानस्सन्देह । कविप्रतिभोत्थापित सन्देह एव चमत्कारकारितया विच्छित्तिविशेषहेतुस्सन्देहालङ्कारे। इह तु सन्देहाभास एव वक्रतया विच्छित्तिमानिति ततोऽस्य भेदः । तर्हि वाक्यार्थस्याभिन्नत्वात्सन्देहस्य तदाभासोऽपि विकल्पाभासान्न भिद्येत। नैतत्, सन्देहविकल्पयोर्भेदेन तदाभासयोरपि भेदोपपत्तेः। न हि वार्थसम्भेदमात्रविकल्प एव सन्देहः एकत्र विषयगतत्वेनान्यत्र विषयनिष्ठत्वेन च वार्थसंभेदोऽपि न तुल्यः। तयोः किञ्चित्कार्यैकविषयत्वाद्विकल्पाभासस्य "किपि तुज्झ" इत्यादौ सिद्धविषयस्यापि सन्देहाभासस्य सम्भवात्स्फुट एव विवेकः ॥ ५० ॥

## विकल्पितयोर्विकल्पाभासः ॥ ५१ ॥

एकत्रतात्पर्यच्छेत्यनुषङ्गः। इह तुल्यप्रयोजनयोरितरपरिहारेणैकेनैव कार्यसम्पत्तौ युगपदनुप्रवेशाभावेन तुल्यबलत्वेन च विरुद्धयोर्विकल्पः। यत्र तु तुल्यप्रयोजनत्व नास्ति तत्र विकल्पो विधीयमानो बाधितत्वाद्विशेषप्रतीत्यर्थं विकल्पवदवभासमानो विकल्पाभास यथा—

आपदां दर्शितः पन्था इन्द्रियाणामसंयमः।
तज्जयः सम्पदां मार्गो येनेष्टं तेन गम्यताम् ॥ २६८ ॥

अत्रेष्टानिष्टफलयोरिन्द्रियविषययोस्संयमासंयमयोर्येनेष्ट तेन गम्यतामिति विकल्पो विधीयमान इष्टसाधनस्यैवोपादानार्हतया बाधितस्वरूपत्वाद्विकल्पाभास । प्रयोजन चात्रास्माभिराज्ञासम्मितत्वेनेदं कार्यं इदं नेति किमर्थमुच्यते यावता भवतामिष्टफलं काय विपरीतं चान्यथेति स्वरसत एव निश्चयः

यतोऽस्माभिरिदमेवमिदं तु विपरीतमित्येतावत्प्रतिपाद्यते। तत्कथं युक्तायुक्तं जानानैरेव भवद्भिरापत्पदापादकोऽसंयम एवालम्बितस्तत्किमत्राभिधीयते तेन यत्किञ्चनकारितापरिहारेण विवेकमवलम्ब्य सर्वसम्पत्समासादनावसानस्संयम एव विधेय इत्यादि विशेषप्रतिपादनम्। यथा च—

एसो वसन्तमासो अह् वरई सोअसल्लसव्वस्सं।
हंहो जुवाण तं धणरसिल्ल वा वच्च इह् व चिट्ठ ॥ २६९ ॥

[ एषो वसन्तमासो अथ वराकी शोकशल्यसर्वस्वम्।
हंहो युवन् त्वं धनरसिक व्रज वा इह् वा तिष्ठ ॥ ]

यथा च।

देवं वा सुरनायकं सफलतासिद्ध्यै यमं वा सुधा-
सारं वा दयिताननेन्दुमपुनर्दुःखाय मोहं च वा।
तत्तद्वाञ्छितकल्पवृक्ष भगवन् सन्दर्श्य मे दीधिति-
ज्योत्स्नाजालशतैरुदग्रविरहध्वान्तोपशान्तिं कुरु ॥ २७० ॥

अत्र शक्रप्रियावदनयोर्वाञ्छितयोर्यममोहाभ्यामनिष्टाभ्यां तुल्यबलत्वाभावादाभासमानो विकल्पः। सुरनायकस्य चात्र प्रकरणावसेयप्रियासङ्घटनहेतुतयेष्टफलत्वम् ॥ ५१ ॥

## विरुद्धाभासत्वं विरोधः ॥ ५२ ॥

जातिगुणक्रियाधर्ममात्रद्रव्याभावानां सजातीयेन विजातीयेन वा विरुद्धेन सम्बन्धे यत्रामुखावभासमानतया परस्परविरोध इव पर्यवसाने समाधानाद्विरोधाभासः स विरोधालंकारः। अस्य जातिर्जात्यादिभिष्षड्भिरेवं गुणस्य पञ्चभिः क्रियायाश्चतुर्भिः धर्ममात्रस्य त्रिभिः द्रव्यस्य द्रव्याभावाभ्यां द्वाभ्यामभावस्य चाभावेन सह विरोधादित्येकविंशतिभेदाः। दिङ्मात्रं यथा—

पुण्डरीकैस्सहरिणैर्मातङ्गैर्यत्र सुद्विजैः।
कृष्णशारैश्च हरिभिः शोभते राजमन्दिरम् ॥ २७१ ॥

अत्र पुण्डरीकादेर्विरुद्धहरिणादिजात्यन्तरसंसर्गैर्विरोधः समाधानं च पुण्डरीकादीनां छत्रादिवाचकत्वादर्थान्तरवृत्तेः ।

लक्ष्मीप्रेमपरः पुरातनमुनिः कूर्मो मखैकप्रियः
स्त्रीरूपः पुरुषोत्तमश्च गरुडारूढः फणीन्द्राश्रितः ।
व्योमन्यस्तपदोऽपि वामनतनुर्मत्स्यो महान्धीवरः
प्रायः कल्पितकौतुकस्स भगवान्नारायणो वोऽवतात् ॥ २७२ ॥

अत्र लक्ष्मीप्रेमपरः पुरातनमुनिः इत्यत्र रागवैराग्ययोर्गुणयोर्विरोधः । कूर्मजातेर्मखप्रियत्वेन गुणेन स्त्रीरूपः पुरुषोत्तम इत्यत्र जात्योर्गरुडारूढः फणीन्द्राश्रित इत्यत्र संयुक्तयोर्गुणिनोर्गरुडफणीन्द्रयोर्द्रव्ययोर्व्योमन्यस्तपदोऽपि वामनतनुरित्यत्र नीचत्वव्योमपदन्यसनयोर्गुणक्रिययोः मत्स्यो महान्धीवर इत्यत्र (जात्योः) विरोधः ।

सविभ्रमाकृष्टसखीजनश्च ससंभ्रमालिङ्गितवल्लभश्च ।
सीमन्तिनीनां सरसीप्रवेशो बभूव शीघ्रश्च विलम्बितश्च ॥ २७३ ॥

अत्र क्रियादीनां गुणासम्बन्धात्प्रवेशक्रियागतयोर्धर्ममात्रयो. शीघ्रत्वविलम्बितत्वयोर्विरोधः ।

भवत्प्रतापेन जगाल सोऽपि हिमालयो नाम नगाधिराजः ।
तद्विप्रयोगेन बभार मेना प्रवालशय्याशरणं शरीरम् ॥ २७४ ॥

अत्र हिमालयस्य गलनस्य च द्रव्यक्रिययोर्विरोधः ।

अमितस्समितः प्राप्तैरुत्कर्षैर्हर्षद प्रभो ।
अहितस्सहितस्साधु यशोभिरसतामसि ॥ २७५ ॥

अत्र मितत्वहितत्वयोस्तदभावेन विरोधः । अत्र च विरोधस्याप्यादिसूचकाभावादार्थत्वं न तु व्यंग्यत्वम् । वाच्यप्रयोगे समुच्चयादेर्व्यंग्यत्वप्रसंगात् ।

तं वीक्ष्य वेपथुमती सरसांगयष्टि-
निक्षेप एव पदमुद्धतमुद्वहन्ती ।
मार्गाचलव्यतिकराकुलितेव सिन्धुः
शैलाधिराजतनया न ययौ न तस्थौ ॥ २७६ ॥
कु. ५·८५

अत्रागमनास्थानयोरभावयोर्विरोधः, न तु क्रिययोर्यंयौ तस्थाविति यद्युच्येत तदा हि क्रियाविरोधो भवेत्। अयं च विरुद्धयोस्संसर्गो भवति। अविरुद्धयोस्संसर्गाद्विरोधो विषमादेर्विषयः। किं च विरुद्धानामसहचारिणां सहचारित्वे विरोध॰, एकस्य दुर्बलतया बाध्यत्वं यदापरस्य बलवत्तया बाधकत्वं तदान्ये विरोधमूला भवन्तीति विषयभेदः। विरोधवद्विरोधमूलेष्वलंकारेष्वाभासमान एव विरोधो बीजमिति तत्र समाधिरभ्यूह्यः। अयं च विरोधस्यार्थाश्रितत्वादर्थालंकारः। न च वाच्यं "सुप्तोऽपि प्रबुद्ध" इति "सन्निहितबालान्धकारा भास्वन्मूर्त्तिश्च" इत्यादौ विरोधाश्रयस्यार्थस्याभावात्पुनरुक्ताभासवच्छब्दाश्रयत्वमेवेति। वस्तुतोऽत्र वाच्यस्य सम्भवाभावेऽपि वाक्यार्थान्वितत्वेन वक्तृश्रोतृभ्यां वाच्यतयाध्यवसितत्वात्। अन्यथाप्यादेर्विरोधसूचकस्य केन सहान्वयः स्यात्। पुनरुक्ताभासत्वे तु पौनरुक्त्याश्रयस्यानन्वितत्वेनाध्यवसानेनापि न वाच्यता। एवं च यदाहुरत्राभासमानत्वाद्विरोधस्य समाधानवेलायामप्यादीनां परित्यागोऽन्वयघटनेति तदपास्तम्। यतो विरोधगर्भस्यैव वाक्यस्य काव्यत्वात्। अन्यस्याभावादकाव्यत्वान्न कुत्राप्यादिपरित्यागः। किन्तु प्रतीतिरवभातविरोधापि अविरोधपर्यवसायिनी न तु वाक्यस्यावस्थाद्वयम्। वास्तवस्यार्थस्यावास्तवेनाभेदेनाध्यवसितत्वादर्थभेदाभावात्। एवं च

त्रयीमयोपि प्रथितो जगत्स्वयं यद्वारुणी प्रत्यगमद्विवस्वान्।
मन्येऽस्तशैलात्पतितोऽत एव विवेश शुद्ध्यै वडवाग्निमध्यम् ॥२७७॥

इत्यत्र त्रयीमयस्य वारुणीगमनरूपेण विरुद्धाचरणेन विरोधालंकारकृतोऽर्थोऽत एवेत्यनेनोत्प्रेक्षाहेतुत्वेनोपात्तः। तेनोत्प्रेक्षोत्तरकालं विरोधसमाधिः। न प्रागुत्प्रेक्षाया अनुत्थानापत्तेः। तदसदेतत्। समाधानस्य वस्तुवृत्तपर्यालोचनालभ्यत्वेन शाब्दत्वाभावात्। बाधोत्पत्तावपि तैमिरिकद्विचन्द्रप्रतीतिवच्छब्दाद्विरोधाङ्कुरितस्यबाधस्य सर्वदैव प्रतीतेः। तेनोत्प्रेक्षोत्तरकालमपि न वाक्यार्थमनुप्रविशति समाधिः। किं चोत्प्रेक्षोत्तरकालविरोधसमाधिरिति भणितेः कोऽर्थः। किमुत्तरकालं कायः किंवोत्तरकालं भवति। न तावदाद्यः। समाधिर्हि बाधस्स च याहच्छिको न पुरुषेच्छामनुवर्तते। तेन प्रागुत्प्रेक्षायाः स्वरसत

एवोल्लासात्। नापि द्वितीयः। स्वकारणवशेन प्रागप्युल्लाससम्भवात्। न ह्युपेक्षा प्रतीतिपर्यवसानरूपा पुरुषस्य प्रयोजननिष्पत्तिं यावद्विलम्बते। पर्यवसाने च समाधिरित्यस्यायमर्थः प्रातीतिको विरोधो न वस्तुत इति। न तु वाक्यस्य मुखे विरोधः, समाप्तावविरोध इति।

स्खलद्गतित्वप्रतिपादनार्थं विरोधबुद्धेः कथितस्समाधिः।
पूर्वं तु वाक्यार्थविरोधबोधो जायेत पश्चादविरोधधीश्च ॥
तस्मादवस्थाद्वयवर्जितत्वात्सदैव वाक्यस्य समाधिकाले।
निरस्यतेऽप्यादिविरोधहेतुरिति स्फुटं बालवचो निरस्तम् ॥

इति संक्षेपः ॥ ५२ ॥

## हेत्वभावे फलोत्पत्तिर्विभावना ॥ ५३ ॥

प्रसिद्धस्य हेतोरभावे फलोत्पत्तिर्विभावना। वस्तुतस्त्विहाप्रसिद्धं कारणमस्त्येवान्यथा विरोधो दुष्परिहारः स्यात्। इह च कारणाभावस्य कार्याभावापेक्षत्वेन कार्योत्पत्तिर्बाधकम्, न तु विरोधवत् परस्परबाधकता। एवं विशेषोक्तावपि कार्याभावेन कारणसामग्र्यं बाध्यते न तु कार्याभावस्तेनेति यद्वा कारणस्य भाव कार्यस्याभाव इति भिन्नविषयत्वाद्भावाभावयोर्विरुद्धयोरेकविषयत्वेनावस्थितत्वाद्विरोधाद्भेदः। एवं विशेषोक्तावपि बोद्धव्यम्। इयं चोक्तनिमित्ता अनुक्तनिमित्ता च। अनुक्तमपि चिन्त्याचिन्त्यत्वेन द्विविधं निमित्तमिति त्रिभेदा। क्रमेण यथा—

पुष्पोद्गमैराभरणप्रयोगं आरेभिरे वामदृशां युवानः।
ततो विना कार्मुककर्म सिद्धिं पुष्पायुधस्यागमदस्त्रमोक्षः ॥२७८॥

अत्र कार्मुककर्मणा कारणेन विनास्त्रमोक्षस्य सिद्धिः। निमित्तं चात्र परस्परानुरागोद्दीपकं पुष्पाणामाभरणीकरणं पूर्वार्धवाक्यार्थीभूतमुक्तम्।

तनोतु मूर्तिं दहतादघानि सस्फुलिङ्गो लोचनपावको यः।
धूमानभिज्ञोऽपि रतेरजस्रमश्रुस्रुतेर्योऽजनि सूत्रधारः ॥ २७९ ॥

अत्र विना धूममश्रुण. कार्यस्येत्यादि मदनदाहाख्यानुक्तनिमित्त उपनिबद्धः।

निरुपादानसंभारमभित्तावेव तन्वते।
जगच्चित्रं नमस्तस्मै कलाश्लाघ्याय शूलिने ॥ २८० ॥

अत्रोपादानादिकारणासम्भवे कार्यस्य जगत उत्पादोऽभिहितः। निमित्तं चात्र लोकातिक्रान्तगुणत्वेन शूलिनोऽचिन्त्यम्। न चात्र कलाख्यं निमित्तमुपात्तमिति वक्तव्यम्। निर्माणज्ञानरूपा कला उपादानादिकारणविरहे न हि भवति तेन तस्या एव निमित्तमाचिन्तनीयम्। या च तत्त्वभेदात्मिका कला सापि न निर्माणनिमित्तम्। तस्या निर्मेयजगच्चित्रमध्यपातित्वेन पृथक्त्वविरहात्। तस्मादचिन्त्यमेवात्र निमित्तम्। एतच्चाध्यवसायाभावाच्छुद्धमुदाहरणम्। पूर्वत्र तु धूमादिनिमित्तस्य बाष्पादेर्वियोगादिनिमित्तेन बाष्पादिनाऽभेदाध्यवसायादतिशयोक्तिगर्भत्वम्। तेन क्वचिच्छुद्धत्वस्यापि संभवात्सवत्रास्या अतिशयोक्त्यनुप्राणितत्वमिति न वाच्यम्। यथा च

ण अ रूवं ण अ रिद्धी णावि कुलं ण अ गुणाण विण्णाणं।
एमेव तह वि कस्स वि को वि अणो वल्लहो होइ ॥ २८१ ॥

[ न च रूपं न च ऋद्धिः नैव कुलं न च गुणा न विज्ञानम्।
एवमेव तथापि कस्यापि कोऽपि जनः वल्लभो भवति ॥ ]

अत्र रूपाद्यभावेऽपि वल्लभत्वस्य निमित्तत्वमाचिन्तनीयम् ॥ ५३ ॥

हेतुसाकल्ये फलानुत्पत्तिर्विशेषोक्तिः ॥ ५४ ॥

नावश्यं कारणानि कार्यवन्ति भवन्तीति न्यायेनासमग्राणां कारणानां कार्याजनकत्वं, समग्राणि तु जनयन्त्येवान्यथा समग्रत्वाभावात्। एवं स्थिते समग्राणामपि हेतूनां कयाचिद्भङ्ग्या कार्यस्यानुपादानकतोपनिबन्धे विशेषोक्तिः। इयमपि पूर्ववत् त्रिधा। क्रमेण यथा—

अथ कडिति हितेऽपि सोमपालः क्षितिभृति सुस्मलजे न भावितोऽभूत्।
फणिपतिपरितापितोऽहिशङ्कां रचयति हारवरेऽपि जीवलोकः ॥२८२॥

अत्र हितत्वाख्ये कारणे सत्यपि भावितत्वस्यानुत्पत्तिः । सुस्मलस्य च दर्शितकृतघ्नत्वेन तत्सुतस्य तत्साहश्यस्य सम्भावना । सुस्मलज इति पर्यायवक्रतयोक्तं निमित्तम् ।

कृतप्रकाशे परितोऽपि कीर्तिज्योत्स्नाभरैर्बाहुबलोद्भटे च ।
यस्मिन्करग्राहिणि चित्रमाशु चिन्तावटे भूपतयो निपेतुः ॥२८३॥

अत्र प्रकाशादिकारणसाकल्येऽपि अस्खलनस्य कार्यस्यानुत्पत्तिरिति किं विशेषोक्तिः किंवा स्खलनस्य कार्यस्य तिमिरादिकारणाभावे प्रादुर्भाव इति विभावनेति संदेहसंकरः । अनयो तथा संकर एव वक्ष्यते किंतु न स्पष्टमेतदुदाहरणम् । तत्तु यथा—

भूरि दुर्भरकुटुम्बडम्बरव्याकुलीकृतधियोऽपि मे मुखात् ।
नाभ्युदेति गुरुगर्वविक्रिया नासिकन्धमनराधमस्तुतिः ॥२८४॥

अत्रोदात्ताशयत्वादिनिमित्तानुपादाने व्याकुलीकृतत्वकारणे सत्यपि नराधमस्तुतेरनुत्पत्तिः ।

स एकस्त्रीणि जयति जगन्ति कुसुमायुधः ।
हरतापि तनुं यस्य शम्भुना न हृतं बलम् ॥ २८५ ॥

अत्र तनुहरणे सत्यपि बलहरणस्य कार्यस्याभावेऽनुपलभ्यमानत्वादचिन्त्यं निमित्तम् । अत्र कुसुमायुधस्य चित्तोद्भवत्वादेर्निमित्तस्य चिन्तनीयत्वं यदा तदोक्तानुक्तनिमित्तत्वेन द्वैविध्यमेव । एवं विभावनोदाहरणयोरपि ऐश्वर्येण सत्यसंकल्पता जन्मान्तरे प्रेमबन्धश्चेति चिन्त्यमेव निमित्तम् । अतश्चैव चिन्त्यताचिन्त्यता च नाम वस्तुधर्मः पुरुषापेक्षत्वात्तदेव हि कस्यचिदचिन्त्यमन्यस्य प्रज्ञातिशयवतश्चिन्त्यमेव भवति । न च नियतप्रमात्रुद्देशेन काव्यलक्षणं प्रवृत्तं न च सर्वेषामचिन्त्यमेवेत्यत्र प्रमाणमस्ति ।

अचिन्त्यता नाम न वस्तुधर्मः संदेहवत्सा हि भवेत्प्रमातुः ।
कस्यापि सर्वस्य तु नैव तस्माद्विभावनादिस्त्रिविधो न वाच्यः ॥

इति संक्षेपः । तदुक्तानुक्तत्वेन द्विविधमेव निमित्तमेतच्चासंगत्यादावभ्यूह्यम् । इयं शुद्धाभ्यासिदर्शनपूर्विका चाद्योदाहृता ॥ द्वितीया यथा—

उद्यन्नेव त्रिभुवनसुरस्सङ्गसङ्गीनि यानि
प्रोल्लासत्वं गमयसि तथा पङ्कजान्यब्जबन्धो।
स्फीता लक्ष्मीर्निवसति यथा तेषु हृत्पङ्कजं मे
किं नाकस्मान्नयसि परमं स्वं निवासं विकासम् ॥ २८६ ॥

अत्राब्जबन्धोः पङ्कजान्तरेषु विकसनेन सह व्याप्तिदर्शनपूर्वो हार्दपङ्कज-विकासरूपकार्याभाव उपनिबद्धः। एवं च—

जो जस्स विहवसारो सो तं देइत्ति किं त्थ अच्छेरं।
अणहोन्तं अपि खु दिण्णं दोहग्गं तइ सवत्तीणं ॥ २८७ ॥
[ यो यस्य विभवसारः स तं ददातीति किमत्राश्चर्यम्।
अभवदपि खलु दत्तं दौर्भाग्यं त्वया सपत्नीनाम् ॥ ]

इत्यादौ विभावनायामपि दर्शितव्याप्तिकत्वं ज्ञेयम् ॥ ५४ ॥

तयोर्देशकालान्यत्वमसंगतिः ॥ ५५ ॥

तयोरिति हेतुफलप्रत्यवमर्शः। हेतुफलयोर्यौ देशकालौ प्रसिद्धौ तयोरन्यथात्वमसंगतिः। तत्रैकदेशत्वेन प्रसिद्धस्य कार्यस्य भिन्नदेशत्वं, भिन्नदेशस्याभिन्नदेशता, पश्चात्कालभाविनः पूर्वकालता सहभावित्वं वा, समनन्तरभाविनश्चिरकालीनता विपर्ययो वा, ऐहिकस्यामुत्रिकत्वमन्यथा वेत्यष्टौ भेदाः। क्रमेण यथा—

बबन्ध धम्मिल्लमधीरदृष्टेः क्ष्मानायकश्चम्पकमालिकाभिः।
चित्तेषु मन्युः स्थिरतां जगाम विपक्षसारङ्गविलोचनानाम् ॥२८८॥

अत्रान्यस्य बन्धोऽन्यस्य स्थैर्यमिति भिन्नदेशत्वम्। अत्र च मन्युस्थैर्यस्य सपत्नीविषयो नृपतेरादरविशेष उपात्त एव निमित्तम्।

उअ जलधरमालाए जत्थव्व उ गज्जिउग्गमो जाओ।
तत्थव्व णु उल्लसिअं विज्जुम्मणिआसलाआहिँ ॥ २८९ ॥
[ पश्य जलधरमालायाः यत्रैव तु गर्जितोद्गमो जातः।
तत्रैव नु उल्लसितं विद्युन्मणिशलाकाभिः ॥ ]

अत्र गर्जितस्य मणिशलाकारूपं कार्य भिन्नदेशत्वेन प्रसिद्धमेकदेशतयोपनिबद्धम् ।

हृदयमधिष्ठितमादौ मालत्याः कुसुमचापबाणेन ।
चरमं रमणीवल्लभ लोचनविषयं त्वया भजता ॥ २९० ॥

अत्र कामुकदर्शनस्य कारणस्य मदनाधिष्ठानस्य च कार्यस्य पौर्वापर्यविपर्ययः । यथा चैवमादौ नातिशयोक्तिस्तथोक्तम् । तत्रैव अतिशयोक्तित्वे वा कार्यकारणयोर्भिन्नदेशत्वेऽप्यध्यवसायसम्भवाद्देशभेदेऽपि तथात्वेऽसङ्गतेरभावप्रसङ्गः ।

दलिताइ वसासोणिअपिच्छिलधारापहम्मि तुह खग्गे ।
अच्छरिअं समसमओ गमागमो कित्तिलच्छीए ॥ २९१ ॥
[ दलितारिवसाशोणितपिच्छिलधारापथे तव खड्गे ।
आश्चर्यं समसमयः गमागमः कीर्तिलक्ष्म्याः ॥ ]

अत्र लक्ष्म्यागमनस्य कार्यस्य कीर्तिगमनस्य च कारणस्य तुल्यकालत्वम् ।

एणीदृशः कुलिशदुर्विषहस्तदानी-
मीषद्विवेश हृदि यः स कटाक्षबाणः ।
हन्तीव मर्मसु विदारयतीव चेत-
श्चित्रं भिनत्ति मम साम्प्रतमङ्गमङ्गम् ॥ २९२ ॥

अत्र च यदैव बाणस्य प्रवेशस्तत्समनन्तरमेव विदारणादिकार्योत्पत्तिरिति प्रसिद्धविपरीता कार्यस्य चिरकालीनतोपनिबद्धा ।

सद्यः करस्पर्शमवाप्य चित्रं रणे रणे यस्य कृपाणलेखा ।
तमालनीला शरदिन्दुपाण्डु यशस्त्रिलोकाभरणं प्रसूते ॥२९३॥

अत्र चिरकालभाविनः प्रसवस्य सद्यःकालता ।

दत्तानि शर्व त्वयि तण्डुलाम्बुपुष्पाणि रत्नामृतपारिजातान् ।
फलन्ति जन्मान्तरभाजि नाके केदारता हन्त चिभोरपूर्वा ॥२९४॥

अत्रैहिकस्य कृषिफलस्य जन्मान्तरभावित्वं भिन्नदेशत्वं चोपनिबद्धम् ।

कृतोपभोगो मन्दारमालाभिस्समरेषु यः ।
सुकृती मुक्तवान्स्वर्गममुष्मिन्नेव जन्मनि ॥ २९५ ॥

अत्र सुकृतफलस्य स्वर्गस्यैहिकत्वम् । यद्यपि चैवमादिष्वध्यवसायसम्भवस्तथापि कार्यकारणयोरुचितदेशकालसङ्गतिपरिहारादतिशयोक्त्यनुप्राणिताऽसङ्गतिरेव । तथा हि

भेदसप्तकमत्रान्यद्यदस्माभिरुदाहृतम् ।
चारुत्वातिशयात्तस्मिन्ननलङ्कारता कुतः ॥
अलंकारान्तरेष्वन्तर्भावो न च निरूप्यते ।
असम्बन्धेऽपि संबन्धाद्यद्यत्रातिशयोक्तिता ॥
तदाद्येऽपि तथाभावादलङ्कारान्तरेषु च ।
न भेदः स्यात्ततस्तेन देशकालान्यथात्वतः ॥
सर्वत्रैव प्रसिद्धायाः कार्यकारणसङ्गतेः ।
उचितायाः परित्यागाद्भेदाष्टकमसङ्गतेः ॥

इति असङ्गतिरेव ॥ ५५ ॥

रूपधर्मयोः परस्परनिबन्धनत्वमन्योन्यम् ॥ ५६ ॥

द्वयोरर्थयोः स्वरूपस्य धर्मस्य वान्योन्यनिबन्धनत्वमन्योन्यम् । स्वरूपस्य यथा—

धनेन जायते प्रज्ञा प्रज्ञया जायते धनम् ।
प्रज्ञार्थौ जीवलोकेऽस्मिन्परस्परनिबन्धनम् ॥ २९६ ॥

अत्र धनप्रज्ञयोः स्वरूपस्य परस्परजननादर्शनात्स्वरूपनिबन्धनमन्योन्यजननं विरुद्धत्वादित्यसमीचीनमामुखेन सर्वत्र विरुद्धत्वात्पर्यवसाने च तत्समाधानात् । अत्रापि कदाचित्कस्यचिद्वा धनेन प्रज्ञान्यस्य चान्यदा वा प्रज्ञया धनमिति पुरुषभेदात्कालभेदाद्वा विरोधसमाधिः ॥ यथा च—

पुढुमिल्लं कारणं अधरखण्डणेणोल्लसेन्ति सिक्कारा ।
सिक्कारेहिं अध अधरखण्डणं सामलंगीणं ॥ २९७ ॥

[ प्राथमिकं कारणं अधरखण्डनेन उल्लसन्ति सीत्काराः ।
सीत्कारेभ्यः अथ अधरखण्डनं श्यामलाङ्गीनाम् ॥ ]

त्वदुपासनया धर्मो धर्मेण त्वदुपासना ।
धियेव शास्त्रसम्बोधः शास्त्रबोधेन धीरिव ॥ २९८ ॥

अत्राधरखण्डनसीत्कारयोर्धर्मभगवदुपासनयोश्च स्वरूपस्य परस्परनिबन्धनत्वम् । धर्मस्य यथा—

मअवससन्थरभमरेहि को विणा करिवरेहिं विंझगिरी ।
विंझेण विणा करिणो पाविज्जन्ति हु परीहवसआणि ॥२९९॥
[ मदवशमन्थरभ्रमरैः को विना करिवरैः विन्ध्यगिरिः ।
विन्ध्येन विना करिणः प्राप्नुवन्ति खलु परिभवशतानि ॥ ]

अत्र परस्परविनोक्त्या विन्ध्यस्य करिणां चान्योन्यमहत्त्वापादानं प्रतीयते । यथा च—

बिभ्रतोऽद्भुतनिधेरगाधतां किं महत्त्वमुदधेर्निगद्यते ।
योऽयमस्य गगनं पिधानतां नेतुमेष गगनाङ्गनस्य च ॥३००॥

अत्रोदधिगगनयोः परस्परापेक्षं पिधानयोग्यत्वम् । यथा च—

सेनारेणुभरेण वा भयभुवा घोरान्धकारेण वा
दृष्टः शात्रवगात्रवञ्चितचणः कैर्लोचनैस्त्वं तदा ।
धन्यं तद्भुवनत्रयस्य परमं ज्योतिर्मयं लोचनं
येनालम्भि तवान्तरं त्वमपि वा यस्यान्तरं लब्धवान् ॥३०१॥

अत्रान्तरलाभस्य परस्परनिबन्धनत्वम् ।

सेवअजणस्स किं सामिणा समाणुण्णइं हरआ ।
सामिणो वि विसोढमाणभंगलहुएण किं तेण ॥ ३०२ ॥
[ सेवकजनस्य किं स्वामिना स्वमानोन्नतिं हरता ।
स्वामिनोऽपि विसोढमानभङ्गलघुकेन किं तेन ॥ ]

अत्र स्वामिसेवकयोरनुचितत्वस्यान्योन्यापेक्षत्वम्।

प्रियतमहृदयं विवेश तन्वी परयुवतिप्रसरापसारणाय।
अतिसुभगतया ह्यन्तु मान्या इति च निजे हृदये न्यवेशयत्तम् ॥२०३॥

यथा वा—

विपर्ययं पूर्वकथाद्भुतस्य चालुक्यभूपालशरश्चकार।
पपात यन्नष्टधृतिर्वराहस्तं विह्वलाङ्गं वसुधा बभार ॥ २०४ ॥

पूर्वत्र तन्वीप्रियतमयोस्तुल्यकारत्वम्। इतरेतराश्रयत्वम्। उत्तरत्र तु वराहवसुधयोर्भिन्नकालतयान्योन्याधाराधेयभावः। एवमादौ च धर्मस्य परस्परजननाभावात्परस्परं जननमित्यव्यापकम्। उपमेयोपमायास्तु यत्रैक एव साधारणो धर्मस्तत्र यद्यप्युपमानोपमेयभावस्य परस्परनिबन्धनत्वं तथापि उपमानोपमेयसमानधर्मादिसद्भावादौपम्यप्रतीतेरुपमानगर्भत्वेन पृथगभिधानम्। 'सविता विधवती'त्यादौ तु शिशिरत्वतापकत्वादिधर्मभेदावलम्बनेनोपमेयोपमाया अन्योन्यविविक्तविषयत्वम्।

कण्ठस्य तस्याः स्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य।
अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः ॥ २०५ ॥
कु. १.४२

इत्यत्र शोभनाख्यः परभागो जनितस्सिद्धरूपो धर्मो न तु साध्यरूपा क्रिया। न तु च धातुप्रयोगमात्रेण तदर्थस्य क्रियात्वं संयोगविभागादेर्गुणस्यापि क्रियात्वप्रसङ्गात्। " श्विता वर्णे " इत्यादेरक्रियात्वेनाभ्युपगमाच्च। अत्र चैकस्य धर्मस्य परस्पराक्षेपत्वम्। यत्र तु कस्यचित्परेण कश्चिद्धर्मो जनितस्तेन तु तस्य धर्मान्तरं जन्यते तत्र कृतप्रतिकृतिरूपा परिवृत्तिः ॥ ५६ ॥

## धर्मिधर्मभावस्य धर्माणां विनिमयो विपर्ययः ॥ ५७ ॥

यत्रोपात्तस्य धर्मिणो धर्मस्य वा विनिमयो[1] धर्मिणो धर्मत्वं धर्मस्य धर्मित्वं च स एकः। यत्र चान्यसम्बन्धी धर्मः परस्य परसम्बन्धी चान्यस्य स धर्मविनिमयरूपो[2] द्वितीयः। क्रमेण यथा—

१. निश्चयो, नियमो। २. विनयम°।

काचो मणिः मणिः काचो येषां तेऽन्ये हि देहिनः ।
सन्ति ते सुधियो येषां काचः काचो मणिः मणिः ॥ ३०६ ॥

अत्र पूर्वार्धे काचत्वादौ धर्मित्वं मणेश्च धर्मत्वं पुनर्विपर्ययः । यथा च—

देव श्रीजयपाल एष समरे कोऽप्यद्य हृद्यस्स्मरः
सौन्दर्यस्य विलासवेश्ममधुरो लावण्यरत्नाकरः ।
यत्पुष्पाणि शिलीमुखा रतिपतेरग्रे भवन्त्यत्र तु
प्राणैर्हन्त शिलीमुखैः शितमुखैः कैः कैर्न पुष्पायते ॥३०७॥

अत्र पुष्पाणां शरत्वं शराणां च पुष्पत्वमिति विनिमयः । एवं " यस्य न सविधे दयिता दवदहनस्तुहिनदीधितिस्तस्य " इत्यादौ तुहिनदीधितेर्धर्मिणो दवदहनत्वं धर्मः दवदहनस्य च तुहिनदीधित्वमित्यादि ज्ञेयम् । द्वितीयो यथा—

अपूर्वेयं धनुर्विद्या भवता शिक्षिता कुतः ।
मार्गणौघस्समायाति गुणो याति दिगन्तरम् ॥ ३०८ ॥

अत्र गुणस्य कर्णान्तिकागमनं मार्गणानां च दिगन्तरगमनं प्रसिद्धं तयोः क्रिययोर्विपर्ययः ।

विपर्ययस्तत्र बभूव कान्ताबिम्बौष्ठरागाञ्जनपुञ्जयोगात् ।
रक्ताम्बुजत्वं दधुरुत्पलानि पद्मानि नीलोत्पलतामवापुः ॥ ३०९ ॥

अत्र कमलत्वोत्पलत्वयोर्जात्योर्विपर्ययः ।

अंगाइ पतणुआइं किमवि किमवि गरइ महुमअविलासो ।
हिअआइं लहुइं करेइ माणगरुआणि वि पिआणं ॥ ३१० ॥
[ अङ्गानि प्रतनुकानि किमपि किमपि गुरयति मधुमदविलासः ।
हृदयानि लघयति मानगुरूण्यपि प्रियाणाम् ॥ ]

अत्र गुरुत्वलघुत्वविनिमयः ।

शफरीविवर्तनपरिस्खलद्भुजा विगलद्विकीर्णमणिकङ्कणावलिः ।
घनधूमजालजनितेन सुन्दरी विरहानलेन समतप्यताधिकम् ॥३११॥

अत्र कार्यत्वकारणत्वयोर्धर्मयोर्विपरिवृत्तिः । "उव खणविहले"त्यादौ सदृशदर्शनस्य स्मरणकारणस्य प्रसिद्धस्य कार्यत्वे स्मरणस्य कारणत्वमिति पूर्ववद्धर्मविपर्ययः । एवमन्यत्र कार्यकारणयोर्ज्ञेयम् । यथा वा—

नित्यनर्तितकटाक्षशिताग्रं सञ्चुकोच नयनं रतियुद्धे ।
पेलवोऽपि नितरामधरौष्ठो दन्तखण्डनविमर्दसहोऽभूत् ॥ ३१२ ॥

अत्र कर्मठत्वेन सम्भावितस्य नयनस्याकर्मठत्वम् । अधरस्यातादृशस्यापि कर्मठत्वमिति विशेषोक्तिर्विभावना च । परस्परं च कर्मठत्वाकर्मठत्वयोर्धर्मयोर्विपर्ययः ।

त्वं द्वित्राणि पदानि गच्छसि महीमुल्लङ्घयन्ति द्विषः
कम्पन्ते सह सैनिकैस्त्वदरयस्त्वद्भूर्मनाक्कम्पते ।
त्वं बाणान्दश पञ्च मुञ्चसि बहून्यस्त्राणि मुञ्चन्ति ते
निन्दा तेष्वथ वर्णना त्वयि कथं श्रीकर्ण निर्णीयताम् ॥३१३॥

अत्र निन्द्यस्य स्तुतिः स्तुत्यस्य निन्देति च विपर्ययः । एवं धर्मान्तराणामप्यूह्यम् ।

परिवृत्तौ विनिमयस्त्यागस्वीकरणात्मकः ।
अस्मिंस्तु धर्मेऽव्यत्त्यासरूपो हेत्वन्तरस्थितिः ॥ ५७ ॥

अविलक्षणाद्विलक्षणकार्योत्पत्तिश्चाचिन्त्यम् ॥ ५८ ॥

यत्रैकस्वभावात्कारणात्परस्परविरुद्धानेककार्योत्पत्तिस्तदेकम् । विलक्षणस्वभावाच्चाविलक्षणस्वभावस्योत्पादस्तद्द्वितीयम् । कार्यस्य कारणस्य चाचिन्तनीयस्वभावत्वादचिन्त्यम् । अचिन्तनीयत्वं चाविचार्यम् । यत्कस्यचिज्जनकं तत्तद्विरुद्धस्योपमर्दकम् । यथा पित्तस्य जनकं कटुकं तद्विरुद्धस्य श्लेष्मण

१. धर्मवृत्त्या सरूपो ।

ापघातकम्। तथा यदेकेन जन्यते तत्तद्विरुद्धेन कारणान्तरेण निवार्यते। यथा ाष्णेन जनितो दाहः शीतेन शाम्यति। तदिह यदि तस्य जनकं तत्कथं द्विरुद्धस्य, विरुद्धस्य चेत्कथं तस्य, यद्वा तथेज्जनकं कथं विरुद्धमपि, यदि ेरुद्धं तत्कथं तदपि इति विचारानर्हत्वादचिन्त्यम्। उदाहरणम्—

अत्रान्तरे कञ्चन वाग्मिभावं वने वने कोकिलमालिकानाम्।
वाचंयमत्वं च........................ ...... ॥ ३१४ ॥

वाचंयमत्वात्मकविलक्षणकार्यस्योत्पत्तिः। यथा च—

चिरसंठिओवि विगलइ माणो चिरविगलिओ वि संघडइ।
विवरीअरसं खु करेइ महुमओ कामिणिजणम्मि ॥ ३१५ ॥
[ चिरसंस्थितोऽपि विगलति मानाश्चिरविगलितोऽपि सद्घटते।
विपरीतरसं करोति मधुमदः कामिनीजने ॥ ]

अत्रैकरूपा मधुमदात्कारणाच्चिरस्थितस्य निवृत्तिश्चिरनिवृत्तस्य प्रवृत्तिरिति विरुद्धकार्योत्पत्तिः। यथा वा—

श्रियं नीलाब्जकान्त्या यः प्रणयिन्यो ददौ दृशा।
अरातिभ्यश्च सहसा जह्रे निस्त्रिंशलेखया ॥ ३१६ ॥

अत्र नीलत्वेनाविलक्षणाद् दृक्त्रिंशलेखालक्षणाद् कारणाच्छ्रीदानहरणरूपविरुद्धकार्योत्पत्तिः।

अच्चासण्णो ओए कीरइ मह मण्डणे पअत्तेण।
अज्ज समप्पइ विरहो एत्ते वि पिए ण एत्ते व्व ॥ ३१७ ॥
[ अत्यासन्नोऽवधिः क्रियतां मम मण्डनं प्रयत्नेन।
अद्य समाप्यते विरह आगतेऽपि प्रियेऽनागतेऽपि ॥ ]

अत्र विरुद्धात् प्रियतमागमनानागमनात्मकादन्योन्यविलक्षणात्कारणद्वयादविलक्षणस्य विरहसमाप्तिरूपस्यैकस्य कार्यस्योत्पत्तिः। यथा वा—

शनिरशनिश्च तमुच्चैर्निहन्ति कुप्यसि नरेन्द्र यस्मै त्वम्।
यत्र प्रसीदसि पुनस्स भात्युदारोऽनुदारश्च ॥ ३१८ ॥

अत्र शनैरशनैश्चान्योन्यविरुद्धाद्धेतुद्वयादेकं हननरूपं कार्यमुप तथात्रैवैकस्मात्प्रसादलक्षणादुदारत्वानुदारत्वयोर्विरुद्धयोः कार्ययोरुत्पादा धानमिति प्रथमो भेदः। प्रथमार्धे चैकस्य कोपस्य शनिप्रेरणाशनि रूपविरुद्धकार्यकारित्वात्सोऽपि।

जो रणमुहम्मि रण्णा निव्जिअ मुत्तो हओ अ रिउवग्गो।
धम्मो पुव्वेण कओ अण्णेणेसो जसो विमलो ॥ २१९ ॥
[ यः रणमुखे राज्ञा निर्जित्य मुक्तो हतश्च रिपुवर्गः।
धर्मः पूर्वेण कृतः अन्येन एतद् यशो विमलम् ॥ ]

अत्र रिपूणां जितानां मोक्षादन्येषां वधाच्चेति विरुद्धात्कारणद्वया द्विमलत्वेनाविलक्षणं धर्मयशोरूपकार्यद्वयमुपनिबद्धम्। अस्य च कार्ययो कारणयोर्वा परस्परं विरोधेनैकविषयविरुद्धधर्मद्वयावस्थानावलम्बिनं विरोधाद्भेदः। यद्यपि तत्कारित्वं विरुद्धकारित्वं च तत्कार्यता विरुद्धकार्य तेति विरुद्धयोर्द्वयोर्धर्मयोरेकत्र निवेशः, तथापि विरुद्धकार्यकारणमुखेन तथा विरोधप्रतीतिर्न स्वतोऽतोऽस्यैव भेदः। अन्यथा कारणाभावे कार्योत्प कार्यता कारणानुत्पन्नता चेति कारणसद्भावे कार्यानुत्पत्तौ कारणता कार्यानुत्प दकता चेति चैकस्यैव विरुद्धधर्मद्वयसंसर्गाद्विभावनाविशेषोक्त्योरपि वि भ्रान्तर्भावापत्तौ, एवमन्येषामपि तन्मूलानां यथाकथञ्चिदन्तर्भावस्य शक्यत्वाद्विरोध एवैकः स्यात्। तेनासङ्गत्यादिवद्भिन्न एवायं विरोधा स्थितम्।

निमित्तयोरत्र निमित्तिनोर्वा विभिन्नयोरेव विरुद्धतास्ति।
विरुद्धसंसर्गनिबन्धनात्तद्भवेद्विरोधात् स्फुट एव भेदः ॥ ॥ ५

## अर्थानर्थपदे तदन्यस्योत्पत्तिर्विषमम् ॥ ५९ ॥

अर्थविषयेऽनर्थोत्पत्तिरेकमनर्थविषये चार्थोत्पत्तिर्द्वितीयम्। क्रमेण यथा

आश्लिष्टोऽपि हुताशनो रचयते दाहोदयं देहिनां
भालं खड्गलता प्रणन्तुरपि चेद्द्वेधा विधत्ते हठात्।

भक्त्या यश्च दिदृक्षमाणमपि मां सद्यो मुनिः शप्तवां-
स्तत्स्वामिन्ननियन्त्रणं विजयते तेजस्विनां चेष्टितम् ॥ ३२० ॥

अत्रालिङ्गनादिफलभूतपरितोषाद्यभावे प्रत्युत दाहादेरनर्थस्योपपत्तिः ।

येन राहुरपि निग्रहेच्छुना दुर्भरोदरभिदा सखीकृतः ।
चक्रिणस्तदतिविक्रमक्रमं चक्रमुत्क्रममपाकरोतु वः ॥ ३२१ ॥

अत्र शीर्षच्छेदात्मकनिग्रहप्रवृत्तेनापि उदरभरणाद्यान्यस्य निवारणादनर्थोऽपि ॥ ५९ ॥

## अनर्थोत्पत्तिर्विरूपकार्योत्पत्तिर्विरूपसङ्घटनमसाकल्यं च ॥ ६० ॥

विषममित्यनुपक्तम् । कारणाद्विजातीयस्यातद्गुणस्य वा कार्यस्य विरूपस्योत्पत्तिस्तृतीयं विषमम् । विरूपयोरसम्भाव्यसयोगयोरननुरूपयोश्च सङ्घ(ट)नं चतुर्थम् । कारणानामर्थान्तराणां वा समग्रत्वाभावः पञ्चमं विषमम् । पृथक्सूत्रणमुत्तरार्थम् । क्रमेण यथा “ उत्सानि शर्वे ”त्यादि । अत्र तण्डुलादिभ्यो रत्नादीना विजातीयानामुत्पत्तिः । यथा च—

लिङ्गेषु यत्स्नपनमिन्दुशिखस्य भूपाः
कुर्वन्त्युपेक्ष्य निजकृत्यरसं तदेषाम् ।
कन्दर्पुरेन्दुवदनाकुचकुड्मलाग्र-
श्च्योतन्महाम्बुसलिलाप्लुतिरुच्छिनत्ति ॥ ३२२ ॥

अत्र स्तनजपनात् स्तनसदृशलिङ्गस्नपननिवृत्तेः उत्पत्तिरिति विजातीयोत्पत्तिः । यथा च—

उण्णामेन्ति दइच्चा जह जह दप्पुङ्कुरं मुहं एए ।
तह तह मुज्झ वि लज्जाइ होइ दूराणअं वअणं ॥ ३२३ ॥
[ उन्नमयंति दैत्या यथा यथा दर्पाङ्कुरं मुखमेते ।
तथा तथा ममापि लज्जया भवति दूरानतं वदनम् ॥ ]

अत्रोन्नतत्वाद्गुणाद्विरुद्धस्य नतत्वस्योत्पत्तिः ।

रविमण्डलम्मि पाआलपंकलेसेहि लंछणासंगो ।
जेहि कओ ताण णमो आइवराहस्स सासाणं ॥ ३२४ ॥

[ रविमण्डले पातालपङ्कलेशैर्लाञ्छनासङ्गः ।
यैः कृतस्तेभ्यो नम आदिवराहस्य श्वासेभ्यः ॥ ]

अत्र (र)विमण्डलस्य पातालपङ्कलाञ्छनं नासम्भाव्यस्संयोगः ।

किं नु स्थूलफलप्रसूः पनसवद्रम्भेव किं कोमलः
कि किं छि(?)ल्लवडल्लपत्रवनवच्छायाढ्यसम्पल्लवः ।
चञ्चच्चम्पकचूतचन्दनवनोद्याने समानस्थितिः
केनायं खदिरद्रुमः खरतराकारोऽपि हा रोपितः ॥ ३२५ ॥

अत्र चम्पकादिमध्ये खदिरस्यानुरूपस्य स्थितिः । यथा वा—

सुधासूतिच्छायाविरचितसितप्रच्छदपटे
कथञ्चिद् विश्रान्तिं कुसुमशयनीयेऽलभत यत् ।
तदेतत् तन्वङ्ग्याः कुसुमसुकुमारं वपुरहो
कथं शेते शातोपलशकलशारे क्षितितले ॥ ३२६ ॥

अत्र वपुषोऽननुरूपायाः क्षितितलावस्थानात्मिकाया अवस्थाया अवस्थान्तरेण सह क्रमेण भावं पर्यायेण सह सङ्करः ।

पृथ्वीयं खलु पीठिका सुघटितं लिङ्गं तदेतन्नभः
सानौ पामरनिम्नगा जलमिदं सज्जीकृतं वर्तते ।
अस्त्येषा पुरतः स्थिता नवनवा नक्षत्रपुष्पावली
स्याच्चेत्कश्चन पूजकोऽत्र तदियं पूजोपक्लृप्ता भवेत् ॥ ३२७ ॥

अत्र पूजकाभावात् पूजाहेतूनामसाकल्यम् ।

गण्डयोररुणिमा दृशि भावः कोऽपि च भ्रुकुटिविभ्रमहेतुः ।
सुभ्रुवां दयितसान्त्वनवर्जं मानकार्यकरणाय मदोऽभूत् ॥ ३२८ ॥

अत्र मानसम्बन्धिनः कार्यकलापस्य दयितसान्त्वनाभावादसाकल्यम्।

यथा च—

जइ गहिरो जइ रअणणिब्भरो जइ अ णिम्मलच्छाओ।
ता किं विहिणा एसो सरसवाणीओ जलणिही ण कओ ॥२२९॥
[यथा गम्भीरो यथा रत्ननिर्भरो यथा च निर्मलच्छायः।
तथा किं विधिना एष सरसपानीयो जलनिधिर्न कृतः॥]

अत्र गम्भीरतादीनां धर्माणां सरसपानीयत्वस्य सरसवाणीकत्वस्य वा विरहादनमनुरूपम्। एवमर्थान्तरेऽप्यभ्यूह्यम्।

द्यौरत्र क्वचिदाश्रिता प्रविततं पातालमत्र क्वचित्
क्वाप्यत्रैव धरा धराधरजलाधारावधिर्वर्तते।
स्फीतस्फीतमहो नभः कियदिदं यस्येत्थमेवंविधै-
र्दूरे पूरणमस्तु शून्यमिति यन्नामापि नास्तं गतम्॥२३०॥

एष्वाद्यावाकाशादेराश्रयस्य महत्त्वे दिवादेराश्रयिणोऽल्पत्वमित्याश्रयाश्रयिणोरनानुरूप्यमधिकमित्यधिकालङ्कारो न वाच्यः। अत्राप्यननुरूपसङ्घटनस्य विषमान्तर्गताद् विषमालङ्कारान्तर्भावोपपत्तेः अन्यथा गुणगुणिनोरनानुरूप्यं निगुर्णमित्याद्यलङ्कारान्तरलक्षणप्रणयनप्रसङ्गः। एवमप्याश्रयस्याल्पत्वादाश्रयिणोऽसाम्येऽनानुरूप्यं विषमालङ्कारविषय एव।

आधाराधेययोर्यत्र संसर्गः स्याद्विरूपयोः।
न स्फुटो विषमो वाच्यमाधिकं नाधिकं ततः॥

असौ मनुष्यमात्रेण लङ्घितो यदि सागरः ।
प्रतापो दशकण्ठस्य भुवनैरपि लङ्घितः ॥ ३३१ ॥

मुहपेच्छआण मुहपेच्छओ सि सिढ़िलाण सिढ़िलसब्भावो ।
थणआअत्तं पेम्म सुहअ ता कस्स कुप्पामो ॥ ३३२ ॥
[ मुखप्रेक्षकाणां मुखप्रेक्षकोऽसि शिथिलानां शिथिलसद्भावः ।
स्तनायत्तं प्रेम सुभग तत्कस्मै कुप्यामः ॥ ]

यथा वा

सन्ध्यासगोत्रं कुसुमप्रबन्धमुवाह यद्गाढमशोकशाखी ।
विलासकीयावकपङ्कदिग्धपादप्रहारस्य तदेव कृत्यम् ॥ ३३२ ॥

एष यथाक्रमं सागरलङ्घनात्प्रतापलङ्घनस्य मुखप्रेक्षकत्वादिकस्य सजातीयस्य धर्मस्य यावकरक्तपादसंसर्गाद्रक्तकुसुमानां समानगुणानां चोत्पादः। एवं चानुरूपकार्योत्पत्तौ विच्छित्तिविशेषवशेन सौन्दर्यातिशयदर्शनात् कारणानुरूपत्वे कार्यस्य न किञ्चिच्चारुत्वमिति न वाच्यम् ।

लच्छी दुहिआ जामाउओ हरी तह घरिल्लिआ गङ्गा ।
अमअमअङ्का अ सुआ अहो कुटुंबं महोदहिणो ॥ ३३३ ॥
[ लक्ष्मीर्दुहिता जामाता हरिस्तथा गृहिणी गङ्गा ।
अमृतमृगाङ्कौ च सुतावहो कुटुम्बं महोदधेः ॥ ]

अत्र दुहितादिरूपाणां लक्ष्म्यादीनामनुरूपाणां शोभनानां संयोगः। अशोभनानां यथा—

उप्पाइअदव्वाणँ वि खलाणँ को भाअणं खलो च्चेव ।
पक्काइँ वि णिम्बफलाइँ णवरं काएहिँ खज्जन्ति ॥ ३३४ ॥
[ उत्पादितद्रव्याणामपि खलानां को भाजनं खल एव ।
पक्वान्यपि निम्बफलानि केवलं काकैः खाद्यन्ते ॥ ]

अत्र खलस्य खलान्तरमेव निम्बस्य चाशोभनस्य काका एव तादृशा उपजीवकत्वेन निबद्धाः ।

श्रीहर्षो निपुणः कविः परिषदप्येषा गुणग्राहिणी
लोकानन्दि च बोधिसत्त्वचरितं नाट्ये च दक्षा वयम्।
वस्त्वेकैकमपीह वाञ्छितफलप्राप्तेः पदं किंपुन-
र्मद्भाग्योपचयादयं समुदितः सर्वो गुणानां गणः॥ २३५॥

अत्राभिनयावहनस्य हेतूनां समग्रत्वम्। अर्थान्तराणां यथा—

क्रान्तकान्तवदनप्रतिबिम्बे भग्नबालसहकारसुगन्धौ।
स्वादुनि प्रणदितालिनि शीते निर्ववार मधुनीन्द्रियवर्गः॥ २३६॥

शि. १०-३

अत्र चक्षुरादीनामिन्द्रियाणां समग्राणां निर्वृतिः॥ ६१॥

## विफलः प्रयत्नो विचित्रम्॥ ६२॥

कायिकस्य वाचिकस्य मानसस्य प्रवृत्तिरूपस्य निवृत्त्यात्मकस्य वा प्रयत्नस्य विफलत्वं विचित्रम्। विफलत्वं च यस्य प्रयत्नस्य यत्प्रसिद्धं कार्यं तद्विरुद्धकार्यत्वमेकम्। प्रयत्नस्य महत्त्वं फलस्य तुच्छत्वं विपर्ययो वेति विषमफलत्वं द्वितीयम्। असाध्यतया, असम्भवात्, अनुपयोगाद्वा फलस्य विगतफलत्वं तृतीयम्। एषां च कायिकादिभेदेन बहुभेदत्वम्।

अर्थो विरुद्धविषमादिरनेकभेदः कार्याश्रितो भवति यद्यपि किन्त्वमुष्मिन्।
औचित्यवत्फलवियोगवपुस्तथापि सामान्यलक्षणमखण्डितभेदभागि॥

दिङ्मात्रं यथा—

धत्ते नेत्रनिमीलनानि पुरतः प्राणेश्वरं वीक्षितुं
तद्वाणीश्रवणाय कर्णपुटयोः पाण्यर्पणं वाञ्छति।
साकं तेन कथाप्रबन्धविधये मौनं समासेवते
हन्तैवं मदनेन सा शशिमुखी किं किं न यत्कार्यते॥ २३७॥

अत्र नेत्रनिमीलनादेरदर्शनादिकं प्रसिद्धं तद्विरुद्धकान्तदर्शनाद्यर्थं प्रयत्नः। स च नेत्रनिमीलने कायिकः पिधानवाञ्छायां मानसश्च प्रवृत्तिरूपो मौनसेवने वाङ्व्यापारस्य निवारणाद्वाचिको निवृत्तिरूपश्च।

केकानिभाद्घटय संपटुचाटुकानि
चञ्चत्कलापमपि दर्शय रञ्जनाय।
हे चातक प्रयतसे जलदं प्रणेतुं (?)
विन्दुं जलस्य लभसे च न लज्जसे च॥ ३३८॥

अत्र चाटुकादेः प्रयत्नस्य महत्त्वं जलविन्दुलाभस्य फलस्य तुच्छत्वम्। अत्र च तुच्छफलत्वं प्रति महतः प्रयत्नस्य कारणत्वाद्धेतुफलयोरनानुरूप्यलक्षणो विषमालङ्कारो नाशङ्कनीयः। तत्र प्रयत्नाभावात्।

पिअअं पडि वलइ मणो माणो ओसरइ विगलई लज्जा।
परिमलमेत्तेणं चिअ मइराए एत्थ किं भणिमो॥ ३३९॥
[प्रियं प्रति वलति मनो मानोऽपसरति विगलति लज्जा।
परिमलमात्रेणैव मदिराया इह कि भणामः॥]

अत्र मदिरापरिमलसेवनरूपस्य प्रयत्नस्य तुच्छत्वं प्रियसाम्मुख्यादेः फलस्य महत्त्वम्।

पाणिप्रस्थैर्बकुलसुमनस्सौरभं यो मिमीते
दम्पत्योर्यस्सुरतचरिते सौख्यसंख्यां करोति।
यश्च ज्योत्स्नां शकलपुटकैः कामामाचामतीन्दो-
श्शक्तस्स्तोतुं स खलु निखिलान्यस्य कीर्त्यद्भुतानि॥ ३४०॥

अत्रासाध्ये वस्तुनि प्रयत्नः सम्भावितः। "अरण्यरुदित"मित्यादि। अत्राबुधसेवनस्य फलाभावाद्विगतफलत्वम्। यथा वा

रिउणो सम्पत्तिसमूसुएहि वीरेहि आकमिज्जन्तु।
अक्कमिअ जलहरं पुण सीह तुमं किमिव पाविहिसि॥३४१॥

[ रिपवः संपत्तिसमुत्सुकैः वीरैराक्रम्यन्ताम् ।
आक्रम्य जलधरं पुनः सिंह त्वं किमिव प्राप्स्यसि ॥ ]

अत्र सिंहस्य वाच्यत्वात्प्रयत्नो जलधरविषयोऽसम्भवत्फलसंध्याध्यार्थीभूत-योपनिबद्ध (?) । "स्वत्पादनखरत्नादि" अत्रानुपयोगाद्विगतफलः कायिक प्रयत्नः । यथा वा—

फग्गुच्छवणिद्दोसं केण वि कद्दमपसाहणं दिण्णं ।
थणअलसमुहपलोट्टन्तसेअधोअं किणो धुअसि ॥ ३४२ ॥

[ फाल्गुनोत्सवनिर्दोषं केनापि कर्दमप्रसाधनं दत्तम् ।
स्तनकलशमुखप्रलुठत्स्वेदधौतं किमिति धावयसि ॥ ]

अत्र कर्दमस्य स्वेदरूपेण निमित्तान्तरेण निवृत्तौ लक्षणस्यानुपयोगः ॥ ६२ ॥

अनाधारमाधेयमेकमनेकगोचरं सम्भावितादधिकस्य विरुद्धस्य वा सम्पत्तिश्च विशेषः ॥ ६३ ॥

आधारं विनाधेयस्य स्थितिरेको विशेषः । यच्च परिमितवस्तु युगपदनेकत्र वर्तते स द्वितीयः । या सम्भावितादधिकस्य विरुद्धस्य वा वस्तुनो निष्पत्तिस्स तृतीयः । क्रमेण यथा—

दिवमप्युपयातानामाकल्पमनल्पगुणगणा येषाम् ।
रमयन्ति जगन्ति गिरः कथमिव कवयो न ते वन्द्याः ॥३४३॥

अत्र कवीनामाधाराणामभावे गिरामाधेयानां स्थितिः । यथा वा

अङ्गानि चन्दनरसादपि शीतलानि
चन्द्रातपं वमति बाहुरयं यशोभिः ।
चालुक्यगोत्रतिलक क वसत्यसौ ते
दुर्वृत्तभूपपरितापगुरुः प्रतापः ॥ ३४४ ॥

अत्राङ्गादीनामनर्हत्वेनाधारत्वाभावेऽप्याधेयभूतस्य प्रतापस्य स्थितिः। अस्मिंश्चाधारस्याधेयतायां कारणत्वेऽप्याधेयस्वरूपं प्रति कारणत्वाभावाद् विभावनातो भेदः।

भयमेकमनेकेभ्यः शत्रुभ्यो युगपत्सदा।
ददासि तच्च ते नास्ति राजंश्चित्रमिदं महत् ॥ ३४५ ॥

अत्रैकस्य भयस्यानेकेषु शत्रुषु युगपद्वर्तनमध्यवसितम्। यथा वा

पश्यामि तामित इतः पुरतश्च पश्चाद्-
न्तर्बहिः पुरत एव विवर्तमानाम्।
उद्बुद्धमुग्धकनकाब्जनिभं वहन्ती-
मासक्ततिर्यगपवर्तितदृष्टि वक्त्रम् ॥ ३४६ ॥

मा. मा. १·४०

चोरिअरमणाउलिए पुत्ति पिअं हरिहिसित्ति कि चुज्जं।
वच्चंती मुहजोण्हाभरेहि तिमिरं पि णण्णिहिसि ॥ ३४७ ॥
[ चौर्यरताकुलिते पुत्रि प्रियं हरिष्यसीति किं चोद्यम्।
व्रजन्ती मुखज्योत्स्नाभरैस्तिमिरमपि नोत्स्यसि ॥ ]

अत्र चौर्यरतेन प्रियरतेन प्रियरञ्जनार्थं गमनरूपस्य प्रयत्नस्य प्रवृत्तस्यानुनिष्पन्नतया तमोहरणरूपं कार्यान्तरमपि सम्भाविताद्भवतीत्युक्तम्।

आलिहमाणीओ वि चित्तवत्तिआ किंपि किं पि तद्दिअहं।
णहु णवरं तणुआयन्ति ताउ वड्ढंति लोअस्स ॥ ३४८ ॥
[ आलिख्यमाना अपि चित्तवृत्तयः ( यच्चित्रवर्तिका वा )
किमपि किमपि तद्दिवसम्।
न खलु केवलं तनुकायन्ते ता वर्धन्ते लोकस्य ॥ ]

अत्र चित्तवृत्तिरूपाणां चित्रवर्तिकानामालेख्यमानत्वेन तनुत्वस्य सम्भावितस्यानुत्पत्तौ विरुद्धाया वृद्धेरुत्पत्तिः। अस्य च सम्भावितविरुद्धोत्पत्तेरर्थानर्थत्वाप्रतीतेर्न विषमान्तर्भावः। यद्यप्यत्रालिखनाद्विरुद्धाद्वृद्धयु-

वृत्तिस्तथापि न विनाशकादुत्पत्तिलक्षणो व्याघातः। आलिखनस्य विरुद्धत्वेऽपि तानवनिमित्ततया वृद्धिनाशत्वायोगात्। न हि वर्धमानस्यालिखनेन तानवं स्वरूपिस्थितस्यैव। अत एव वचनव्यक्तिः "दृशा दग्धं दृशैवोत्पादयन्ति" इत्यादि दिक्। अत एव च न केवलं तनूभवन्ति प्रत्युतायं विशेषो यद्वर्धन्ते इति वाचोयुक्तिभेदमात्रप्रयुक्तत्वाच्चालङ्कारभेदस्येति विशेष एव उक्तः ॥ ६३ ॥

## उत्पत्तिविनाशयोरेकोपायत्वे व्याघातः ॥ ६४ ॥

यत्र येनैवोपायेन किञ्चिन्निष्पद्यते तेनैव चान्यथा भवति स व्याघातः। अस्योत्पत्तिकारणाद्विनाशः विपर्ययो वेति द्वौ भेदौ यथा।

कुलममलिनं भद्रा मूर्तिर्मतिः श्रुतिशालिनी
भुजबलमलं स्फीता लक्ष्मीः प्रभुत्वमखण्डितम्।
प्रकृतिसुभगा ह्येते भावा अमीभिरयं जनो
व्रजति सुतरां दर्पं राजंस्त एव तवाङ्कुशाः ॥ ३४९ ॥

अत्रोत्पत्तिकारणाद्दर्पस्य विनाशः।

दृशा दग्धं मनसिजं जीवयन्ति दृशैव याः।
विरूपाक्षस्य जयिनीस्ताः स्तुवे वामलोचनाः ॥ ३५० ॥

अत्र मनसिजस्य दृगेव विनाशकारणं तत एव चोत्पत्तिः।

विण्णाणेण मअविसं विणिवट्टइ भिण्णकारणुप्पण्णं।
विण्णाणकारणं जं तं पुण भण को णिवट्टेइ ॥ ३५१ ॥
[ विज्ञानेन मदविषं विनिवर्तते भिन्नकारणोत्पन्नम्।
विज्ञानकारणं यत्तत्पुनर्भण को निवर्तयति ॥ ]

अत्र मदस्य विनाशकारणादपि विज्ञानादुत्पादः वक्ष्यमाणावाक्यालङ्काराश्रयोपनिबद्धः।

गाढकान्तदशनक्षतव्यथासङ्कटादरिवधूजनस्य यः।
ओष्ठविद्रुमदलान्यमोचयन्निर्दशन्युधि रुषा निजाधरम् ॥ ३५२ ॥

अत्राधरदशनेनाधरपीडाया निवृत्तिरित्युत्पादकाद्विनाशः। "बाल इति सुतरामपरित्याज्योऽस्मि। रक्षणीय इति भवद्भुजपञ्जरं रक्षास्थानम्" इत्यादौ श्रीहर्षस्य विजेतुं प्रस्थितं ज्यायांसं राज्यवर्धनं प्रत्युक्तौ राज्यवर्धनेन बालत्वाप्रस्थाननिमित्तं सम्भावितं तेन प्रत्युत सौकर्येण प्रस्थाननिमित्ततया समर्थितमिति "सौकर्येण कार्यविरुद्धक्रिया च" इति भेदान्तरं व्याघातस्येति न वाच्यम्। तथाहि। यदि प्रस्थानरूपं विरुद्धमेव कार्यं बाल्यादिना क्रियते तदयमेव व्याघातो न भेदान्तरमपि प्रस्थानाभावनिमित्तात्प्रस्थानोत्पत्तौ विनाशकारणादुत्पत्तेः। अथ चेत्प्रस्थानाप्रस्थानयोर्द्वयोरपि विरुद्धयोर्बाल्यादिकस्य कारणस्य सद्भावादप्रस्थाने बाल्यादेरनैकान्तिकत्वं विवक्ष्यते तर्हि एकस्य कारणस्य परस्परकार्यद्वयजननादचिन्त्यालङ्कारेऽस्यान्तर्भाव इति न व्याघातस्य भेदः। यथा चात्र वक्रोक्तेर्भेदास्तथोदाहरिष्यते ॥ ६४ ॥

प्रतिबन्धकादेर्विधानासामर्थ्यमशक्यम् ॥ ६५ ॥

कार्यस्य जननप्रतिबन्धकसम्भवादन्यतो वा निमित्तात्कर्तुमशक्यत्वं तदशक्यमलङ्कारः। यथा—

क्वचिज्झिल्लीनादः क्वचिदतुलकाकोलकलहः
क्वचित्कङ्कारावः क्वचिदपि कपीनां कलकलः।
क्वचिद्घोरः फेरुध्वनिरयमहो दैवघटनात्
कथंकारं तारं क्वणतु चकितः कोकिलयुवा ॥ ३५३ ॥

अत्र झिल्लीनादादीनां कर्णकटुत्वेन प्रतिकूलानामुद्भूतत्वात् कोकिलस्य क्वणनासामर्थ्यम्। यथा वा—

स्त्री गौरी परमार्थतो भगवती बालश्च चूडाशशी
निष्कर्णस्स च वासुकिर्नवनवोल्लोला तथा जाह्नवी।
गौर्गौरेव किमुच्यतां स्वयमपि स्वामी महाभैरवः
कष्टं मद्विधमुग्धसेवकजनस्यैतस्य का स्याद्गतिः ॥ ३५४ ॥

अत्र सेवाद्वाराणां सर्वेषां स्त्र्यादिरूपत्वेनाननुरूपत्वात्कारणान्तराभावाच्च सेवाया अशक्यत्वम्। यथा वा—

विण्णाणेण मअविसं विणिवट्टइ भिण्णकारणुप्पण्णं।
विण्णाणकारणं जं तं पुण भण को णिवट्टेइ॥ ३५५॥
[ विज्ञानेन मद्विषं विनिवर्तते भिन्नकारणोत्पन्नम्।
विज्ञानकारणं यत्तत्पुनर्भण को निवर्तयति॥ ]

अत्र विनाशकारणाद्विज्ञानाद्यदि मदस्योत्पत्तिः तत्केनान्येन निवार्यत इति निवारणासामर्थ्यम्। यथा च—

बाणैरेव शरैः स्मरेण जनितः शीतांशुना वर्धितः
प्रालेयाचलसन्निधानशिशिरैश्चैत्रानिलैः पोषितः।
आलापेन परामृतद्रवमयेनाप्यायितः कोकिलैः
संतापो मनसोऽयमस्य कतमः शीतोपचारक्रमः॥ ३५६॥

अत्र शीतोपचारनिवारणीयस्य सन्तापस्य शीतेभ्य एव वृद्धिमुपगतस्यानुपशमनीयता। ननु पूर्वस्मिन्नुदाहरणद्वये भिल्लीनादादीनां कोकिलकणनेन प्रतिकूलत्वात्सेवानुगुणत्वेन गौर्यादीनामशोभनानां साकल्यात्समालङ्कारः। उत्तरत्र तु विनाशकादुत्पत्तौ व्याघात इति कथमलंकारान्तरम्। उच्यते। यद्यप्यत्र साकल्यं तथापि कार्याशक्यतालक्षणस्य विच्छित्त्यन्तरस्य दर्शनान्न समालङ्कार एव किन्तु कथनासामर्थ्यस्य वाक्यार्थत्वेन प्राधान्यात्तदुपाकृतस्याशक्यालङ्कारस्याङ्गित्वम्। "उप्पाइअदव्वाण" इत्यादौ विविक्तविषयत्वाच्च समस्य। एवमुत्तरयोरपि व्याघातस्य कार्याक्षमतायां पर्यवसानादन्यत्र सावकाशत्वाच्च तदुत्थापितस्याशक्यस्य न तदन्तर्भावः कर्तुं शक्यः। युक्तं चैतत्, समपरिहारेण व्याघातलिङ्गितस्य दर्शनाच्च समान्तर्भावो व्याघातत्यागेन च समेऽपि सम्भवाच्चापि तद्रूपता नाप्यस्य द्वयसङ्कीर्णतैव तात्पर्यत्यागेनाप्यासिंगतस्यापि

उज्जुअरए ण तूसइ वक्कम्मि वि आअमं विअप्पेइ।
एत्थ अहव्वाएँ मए पिए पिअं कहँ णु काअव्वं॥ ३५७॥
[ ऋजुकरते न तुष्यति वक्रेऽप्यागमं विकल्पयति।
इहाभव्यया मया प्रिये प्रियं कथं नु कर्तव्यम्॥ ]

इत्यादौ दर्शनात्। अत्र ऋजुना रमणेन वक्रेणापि वा प्रियविपवे प्रियकरणमशक्यतयोक्तम्। नापि झिल्लीनादादेर्निमित्तस्योक्तत्वादुक्तनिमित्तविशेषोक्तिः। कारणसद्भावे कार्यानुत्पत्तौ तस्या भावादिह तु प्रतिबन्धकारणाभावाद्वा सर्वथापि दोषदर्शनादेः कर्तुमशक्यत्वस्य वाक्यार्थीभावात् वाचोयुक्तिभेदेन प्रतीतिभेदाच्च। किं च

प्रतिबन्धसन्निधिवियोगवशादिह वस्तुनो भवति कारणता।
प्रतिबन्धकोऽत्र खलु सन्निहितः सति कारणे न फलहारिता॥

इति। तेनालङ्कारान्तरमेवेति साधु॥ ६५॥

## दोषगुणयोरन्यथात्वं व्यत्यासः॥ ६६॥

यत्र दोषस्य गुणत्वं गुणस्य दोषत्वं च भवति स व्यत्यासः। अस्य देशभेदेन कालभेदेन वा दोषगुणयोरन्यथाभावे चत्वारो भेदाः। क्रमेण यथा—

सच्चिअ जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ।
मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से॥ ३५८॥
[ सैव जानाति द्रष्टुं सदृशे जने युज्यते रागः।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयं तस्याः॥ ]

सर्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनाम्।
अकीर्तिहेतुस्स महान्दोषस्तु पृथिवीपतेः॥ ३५९॥

अनयोरन्यासां मरणस्य दुष्टत्वेऽपि अस्यां श्लाघनीयत्वेन गुणत्वम्। योगिविषयतया समदृष्टित्वस्य गुणस्य राजविषयतया दुष्टत्वमिति दोषगुणयोर्देशभेदेनान्यथात्वम्। ननु चात्र "बहु मण्णइ पामरोरोरम्" इत्यादाविव धर्मस्य न्यूनगुणस्यादरत्वेन जीवितादेरधिकगुणस्यानादर उपनिबद्ध इति प्रतीपालंकारस्तत्कथं व्यत्यासः। उच्यते। अत्र शूरादीनामिव संग्रामादौ सदृशानुरागनिमित्तस्य मरणस्य तत्त्वत एव श्लाघनीयत्वेन न्यूनगुणादरायोगान्न प्रतीपान्तर्भावः। अत एव मरणमपि श्लाघनीयमस्या इत्युक्त्यान्यत्र दोषोऽप्यस्या गुण इति प्रकाशितम्। तत्र तु दारिद्र्यस्य पामरेणैव मान्यतया न्यूनगुणस्यादरः। इह तु तन्मरणमपि श्लाघनीयमिति देशभेदेन दोषस्य गुणत्वमेवेति ततो भेदः।

अन्यदा भूषणं पुंसश्शमो लज्जेव योषितः।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ३६० ॥　शि. २·४४

अत्रान्यदा पराक्रमवैयात्ययोः पराभवसुरतविषये गुणत्वमिति कालभेदः।

मध्येसभं सुकविकोविदमण्डलीनां
मौलौ निवेश्य किमपि प्रतिपत्तिपूर्तैः।
यन्मानितोऽस्मि भवता रुचिरैर्वचोभिः
जातं तदेव बत शल्यमिवाधुना मे ॥ ३६१ ॥

अत्र सम्मानस्य परितोषत्वेन गुणस्याधुना मानयितुरतीतत्वाच्छल्यायमानत्वेन दुष्टत्वम्। इह तु—

सुकअं चिअ परिभोगाण कारणं सुहअ ते वि मोहस्स।
मोहो पावाण परंपराएँ सुकअं चिअ विरुद्धं ॥ ३६२ ॥
[ सुकृतमेव परिभोगानां कारणं सुभग तेऽपि मोहस्य।
मोहः पापानां परम्परायाः सुकृतमेव विरुद्धम् ॥ ]

अत्र सुकृतस्य गुणस्य पारम्पर्येण पापात्मकदोषजनकत्वेन विरूपकार्योत्पत्तिरूपो विषमालंकारो न व्यत्यासः। गुणस्यैव देशकालभेदेन दोषतायामेतस्य भावात् ॥ ६६ ॥

तदन्याभ्यां समाधानं समता ॥ ६७ ॥

दोषगुणयोरित्यनुपक्तम्। उत्तरत्र च। यत्र कस्यापि दोषः तत्संबन्धिनैव गुणेन गुणो दोषेण वा समाधीयते समपमार्यते स दोषस्य गुणस्य वा उत्कटत्वाभावात् समता। क्रमेण यथा—

यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि।
तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥३६३॥

अत्र कूपखानकवद्वृत्त्या धूमसुदेन होमादुत्पन्नस्य मालिन्यस्य तज्जनितेनैव कीर्तिप्रवाहेण क्षालनमिति दोषो गुणेन समाहितः। यथा च

इत्यादौ दर्शनात्। अत्र ऋजुना रमणेन वक्रेणापि वा प्रियविषये प्रियकरणमशक्यतयोक्तम्। नापि झिल्लीनादादेर्निमित्तस्योक्तत्वादुक्तनिमित्त-विशेषोक्तिः। कारणसद्भावे कार्यानुत्पत्तौ तस्या भावादिह तु प्रतिबन्ध-कारणाभावाद्वा सर्वथापि दोषदर्शनादेः कर्तुमशक्यत्वस्य वाक्यार्थीभावात् वाच्योयुक्तिभेदेन प्रतीतिभेदाच्च। किं च

प्रतिबन्धसन्निधिवियोगवशादिह वस्तुनो भवति कारणता।
प्रतिबन्धकोऽत्र खलु सन्निहितः सति कारणे न फलहारिता॥

इति। तेनालङ्कारन्तरमेवेति साधु॥ ६५॥

## दोषगुणयोरन्यथात्वं व्यत्यासः॥ ६६॥

यत्र दोषस्य गुणत्वं गुणस्य दोषत्वं च भवति स व्यत्यासः। अस्य देश-भेदेन कालभेदेन वा दोषगुणयोरन्यथाभावे चत्वारो भेदाः। क्रमेण यथा—

सच्चिअ जाणइ दट्ठुं सरिसम्मि जणम्मि जुज्जए राओ।
मरउ ण तुमं भणिस्सं मरणं पि सलाहणिज्जं से॥ ३५८॥
[ सैव जानाति द्रष्टुं सदृशे जने युज्यते रागः।
म्रियतां न त्वां भणिष्यामि मरणमपि श्लाघनीयं तस्याः॥ ]
सर्वत्र समदृष्टित्वं गुणोऽयं खलु योगिनाम्।
अकीर्तिहेतुस्स महान्दोषस्तु पृथिवीपतेः॥ ३५९॥

अनयोरन्यासां मरणस्य दुष्टत्वेऽपि अस्यां श्लाघनीयत्वेन गुणत्वम्। योगि-विषयतया समदृष्टित्वस्य गुणस्य राजविषयतया दुष्टत्वमिति दोषगुणयोर्दे-शभेदेनान्यथात्वम्। ननु चात्र "बहु मण्णइ पामरोरोरम्" इत्यादाविव धर्मस्य न्यूनगुणस्यादरत्वेन जीवितादेरधिकगुणस्यानादर उपनिबद्ध इति प्रतीपालंका-रस्तत्कथं व्यत्यासः। उच्यते। अत्र शूरादीनामिव संग्रामादौ सदृशानुराग-निमित्तस्य मरणस्य तत्त्वत एव श्लाघनीयत्वेन न्यूनगुणादरायोगान्न प्रतीपान्त-र्भावः। अत एव मरणमपि श्लाघनीयमस्या इत्युक्त्यान्यत्र दोषोऽप्यस्या गुण इति प्रकाशितम्। तत्र तु दारिद्र्यस्य पामरेणैव मान्यतया न्यूनगुणस्यादरः। इह तु तन्मरणमपि श्लाघनीयमिति देशभेदेन दोषस्य गुणत्वमेवेति ततो भेदः।

अन्यदा भूषणं पुंसश्शमो लज्जेव योषितः ।
पराक्रमः परिभवे वैयात्यं सुरतेष्विव ॥ ३६० ॥　शि. २·४४

अत्रान्यदा पराक्रमवैयात्ययोः परामवसुरतविषये गुणत्वमिति कालभेदः ।

मध्येसमं सुकविकोविदमण्डलीनां
मौलौ निवेश्य किमपि प्रतिपत्तिपूतैः ।
यन्मानितोऽस्मि भवता रुचिरैर्वचोभिः
जातं तदेव बत शल्यमिवाधुना मे ॥ ३६१ ॥

अत्र सम्मानस्य परितोषत्वेन गुणस्याधुना मानयितुरतीतत्वाच्छल्यायमानत्वेन दुष्टत्वम् । इह तु—

सुकअं चिअ परिभोगाण कारणं सुहअ ते वि मोहस्स ।
मोहो पावाण परंपराएँ सुकअं चिअ विरुद्धं ॥ ३६२ ॥
[ सुकृतमेव परिभोगानां कारणं सुभग तेऽपि मोहस्य ।
मोहः पापानां परम्परायाः सुकृतमेव विरुद्धम् ॥ ]

अत्र सुकृतस्य गुणस्य पारम्पर्येण पापात्मकदोषजनकत्वेन विरूपकार्योत्पत्तिरूपो विषमालंकारो न व्यत्यासः । गुणस्यैव देशकालभेदेन दोषतायामेतस्य भावात् ॥ ६६ ॥

## तदन्याभ्यां समाधानं समता ॥ ६७ ॥

दोषगुणयोरित्यनुषक्तम् । उत्तरत्र च । यत्र कस्यापि दोषः तत्संबन्धिनैव गुणेन गुणो दोषेण वा समाधीयते समपसार्यते स दोषस्य गुणस्य वा उत्कटत्वाभावात् समता । क्रमेण यथा—

यः कोटिहोमानलधूमजालैर्मलीमसीकृत्य दिशां मुखानि ।
तत्कीर्तिभिः क्षालयति स्म शश्वदखण्डतारापतिपाण्डुराभिः ॥३६३॥

अत्र कूपखानकवद्वृत्त्या धूममुखेन होमादुत्पन्नस्य मालिन्यस्य तज्जनितेनैव कीर्तिप्रवाहेण क्षालनमिति दोषो गुणेन समाहितः । यथा च

य इह पथिकविप्रयोगदीर्घीकरणवशादुद्भून्मधोरधर्मः ।
मुकुलितरजनेस्स चक्रनाम्नां विरहतनूकरणेन तस्य शान्तः ॥३६४॥

अत्र मधोः स्वाधिकारे वर्तमानस्य पथिकविरहवर्धनादुत्पन्नस्याधर्मस्य चक्रवाकविरहतनूकरणान्निवृत्तिः ।

पादाम्बुजे मज्जति सुन्दरीणां सोच्छ्वासमासीत् सरसीषु पुष्पम् ।
उत्कण्ठनं वीक्ष्य पुनर्मुखेन्दुं विडम्बनां प्रापदखण्ड एव ॥ ३६५ ॥

अत्र जलकेलिप्रवृत्तसुन्दरीपादनिमज्जनात् पद्मोच्छ्वासस्य गुणस्य तदीयमुखदर्शनेन निवृत्तिः । यथा च

कुविआएँ पाअपडणेण जो प्पसाओ ज्जिओ तुमए ।
रे मूढ सअं चिअ सो हारिअओ गोत्तखलणेण ॥ ६६६ ॥

[ कुपितायाः पादपतनेन यः प्रसादोऽर्जितस्त्वया ।
रे मूढ स्वयमेव स हारितो गोत्रस्खलितेन ॥ ]

अत्रानुनयार्थं पादपतनचाटुकादि कुर्वता पादपतनेनार्जितस्य प्रसादाख्यस्य गुणस्य चाटुकान्तर्गतेन गोत्रस्खलनेन हारणमिति गुणो दोषेण समाहितः । अस्याश्च नाचिन्त्यालङ्का ( रा )न्तर्भावशङ्का कार्या यतः—

अपरेण समाधानविवक्षा गुणदोषयोः ।
समतायामचिन्त्ये तु तदभावाद्विरुद्धता ॥ इति ॥ ६७ ॥

सजातीयविजातीयाभ्यां तुच्छत्वमुद्रेकः ॥ ६८ ॥

यत्र दोषगुणयोः सजातीयविजातीयापेक्षया तुच्छत्वं स दोषस्य दोषान्तरापेक्षया गुणापेक्षया वा गुणस्य गुणान्तरापेक्षया दोषापेक्षया वोत्कटत्वाच्चतुर्भेद उद्रेकः । क्रमेण यथा—

साम्मुख्यं प्रियभाषिताय हसितं साकूतमालोकितं
स्निग्धं वा मयि जातु यत्र भवतो नैतत्तथारुन्तुदम् ।
एतत्किन्तु तथा त्वदाप्तविभवोत्सेकान्धसर्वज्ञता-
श्रद्धाकामुकदुर्बुधोपहसितं दुःखाकरोत्युच्चकैः ॥ ३६७ ॥

अत्र साम्मुख्यभावादितुच्छदोषापेक्षया दुर्बुधोपहासस्योत्कटत्वम् ।

पततु वारिणि यातु दिगन्तरं
विशतु वह्निमथो व्रजतु क्षितिम् ।
रविरसावियता च गुणेषु का
सकललोकचमत्कृतिषु क्षतिः ॥ ३६८ ॥

अत्र वारिपतनादीनां दोषाणां रविरसावित्यस्मात्प्रतीतेन विश्वप्रकाशत्वादिना गुणेनाच्छादितत्वादगण्यतया तुच्छत्वम् ।

कुन्तैरन्तरितप्रथेषु पूतनानाथेषु निर्मथ्नत-
स्त्वत्सेना पृथिवीभुजो यदजयत्तन्ते कियत्कौशलम् ।
तच्चित्रं निरपत्रपस्य यदसौ गीर्वाणवन्दिग्रहा-
त्सुत्राम्णोऽपि कृतस्त्वयाद्य समरे साहायकायोद्यमः ॥ ३६९ ॥

अत्र पृथिवीपतिजयरूपगुणापेक्षया शक्रसाहायकायोद्यमात्मकस्य गुणस्योद्रिक्तत्वम् ।

एतत्पातालकुक्षिंभरि चिरविलसद्दिक्करिप्रीणिताभ्रं
श्रीगर्भं श्वभ्रमभ्रंलिहलहरि हरिस्थानमस्त्येव किन्तु ।
कल्पान्ते व्याप्य विश्वं स्थितमुपरिसरिन्नाथ पाथस्त्वदीयं
किन्त्वेतत्कुम्भयोनेः करकुहरदरीपूरि नाचामतोऽभूत् ॥ ३७० ॥

यथा च

चापाचार्यस्त्रिपुरविजयी कार्तिकेयो विजेयः
शस्त्रन्यस्तस्सदनमुदधिर्भूरियं हन्तकारः ।
अस्त्येवैतत्किमु कृतवता रेणुकाकण्ठबाधां
बद्धस्पर्धस्तव परशुना लज्जते चन्द्रहासः ॥ ३७१ ॥

आद्ये पातालकुक्षिम्भरित्वादीनां गुणानां करमात्रपूरणाशक्तत्वरूपेण दोषेण तुच्छत्वम् । उत्तरत्र यद्यपि शौटज्ञानां (?) रेणुकाकण्ठबाधसाकल्याभावाद्विपमालङ्कार तथापि त्रिपुररिपुशिष्यतादीनां गुणानां स्त्रीवधाख्येन दोषेणाच्छा-

दितत्वात्तुच्छस्य प्राधान्येन प्रतीतेरुद्रेकस्योत्कटत्वम्। अत एवोदाहरणान्तरेषु यद्यपि तुच्छातुच्छयोर्दोषगुणयोर्विरूपयोस्सङ्घट्टनाद्विषमच्छायासम्भवस्तथाप्युद्रिक्तेन दोषेण गुणेन वान्येषामाच्छादितत्वादस्त्येव विच्छित्तिविशेष इत्युद्रेकोऽपि।

उग्गच्छउ दिणणाहोऽत्थमेउ ससि किं अम्ह छिण्णमेएण।
एअं पुण मह दुक्खं जं पत्ता पङ्कजेहिँ सिरी॥ ३७२॥
[ उद्गच्छतु दिननाथोऽस्तमेतु शशी किमस्माकं छिन्नमेतेन।
एतत्पुनर्मम दुःखं यत्प्राप्ता पङ्कजैः श्रीः॥ ]

इत्यादावुदयास्तमयरूपयोर्द्वयोरपि गुणदोषयोः पङ्कजदोषकर्तृकया दोषात्मिकायाः श्रीप्राप्त्या तिरोहितत्वात्तुच्छत्वम्। एवमन्यत्रापि सङ्कीर्णत्वमभ्यूह्यम्।

उपमानोपमेयत्वं योगेन गुणदोषयोः।
तुच्छोद्रिक्तस्य दोषादेर्व्यतिरेकाद्विभिन्नता॥

इति परिकरश्लोकः॥ ६८॥

## निवृत्तावन्योदयस्तुल्यम्॥ ६९॥

एकस्य दोषस्य निवृत्तौ दोषान्तरोदयो गुणस्योदयो गुणान्तरनिवृत्तिश्चेति दोषनिवारणे दोषान्तराविर्भावाद् गुणाश्रयणे गुणान्तरनिवृत्तेराधिक्याभावात् तुल्यम्।

देव त्वद्गुणवर्णनेन सुखयत्याखण्डलं नारद-
स्त्वत्र श्रोत्रकटु क्वणन्ति मधुपास्तत्पारिजातस्रजि।
वार्यन्ते यदि चाप्सरोभिरभितस्ते चामराडम्बरै-
रुद्वेलद्भुजवल्लिकङ्कणकणत्कारस्तदा दुःश्रवः॥ ३७३॥

अग्घंतु सिसिरसमए कामीण घणावरुण्डणमहल्ली।
जलकेली पुण पअडत्थणजहणो सो गओ च्चेव॥ ३७४॥

[ अर्घं तु शिशिरसमये कामिनां घनालिङ्गनसुखर्धयः ।
जलकेलिः पुनः प्रकटस्तनजघनस्स गत एव ॥ ]

पूर्वत्र गुणवर्णने विकारित्वेन दोषात्मकानां मधुपानां यद्यपसारणं तदा कङ्कणकणत्कारात्मकस्य दोषान्तरस्योदयः । अपरत्र घनालिङ्गनस्य गुणस्योत्पत्तौ जलकेलिरूपगुणान्तरनिवृत्तिः । अस्य चैकदोषनिवृत्तौ दोषान्तरोत्पत्त्यादिरूपतया दोषस्यैकनिमित्तोत्पत्त्येनैव गुणेन निवारणादिलक्षणात्समलाङ्काराद्भेदः । यद्यपि चात्र दोषादिनिवृत्तेर्गुणादिरूपता वक्तुं शक्या तथापि तत्र दोषस्य गुणस्य वा सतो निवर्त्तिरिह तु निवृत्तौ दोषत्वं गुणत्वं वेति भेद एव । अस्मिंश्च मधुकरादिनिवारणादेः कङ्कणकणत्कारादिदोषान्तरोत्पत्तिमुखेन विफलत्वेऽपि न विचित्रालङ्कारता शङ्क्या । तत्र हि सम्भावितस्य फलस्यासम्भव एव । इह तु मधुकरनिवारणादेस्तु कणनादिश्रवणादिद्वारसफलत्वेऽपि गुणवर्णनादिप्रतिबन्धककङ्कणकणत्कारादिदोषान्तरोत्पत्तेर्भिन्नविषयत्वम् । यद्येवमेकस्य दोषस्य निवृत्तौ क्रमेण दोषान्तरगमनात्पर्यायस्यायं विषयः । सत्यम् । तथाप्येकदोषादिनिवृत्तौ दोषान्तराद्येराविर्भावाद्यकृता कार्यसम्पत्तिलक्षणायास्तुल्यताया अत्र निष्पत्तिरेव ॥

अत्रैकदोषादिनिवृत्तिकालं यद्यप्यपूर्वस्य पुनर्निवृत्तौ ।
पर्यायशङ्कास्ति तथापि भेदः पक्षद्वये यत्र विशेषलेशः ॥
प्रयत्नवैफल्यवपुर्विचित्रमस्मिन्न शङ्क्यं यदिह प्रयत्नः ।
प्रवर्त्यते दोषनिवारणादौ स चास्ति वैफल्यमतः कुतस्त्यम् ॥ ६९ ॥

## अप्राप्तार्थं तत्तुल्यानादरोऽनादरः ॥ ७० ॥

यदा यद्रूपे वस्तुनि प्राप्तेऽपि तत्तुल्याप्राप्तवस्त्वन्तरावाप्त्यर्थं तस्यानादरस्तदनादराख्योऽलङ्कारः । अस्य चान्यथानुत्पत्तिमुखेन दोषाद्यन्तराविर्भावापेक्षिणस्तुल्यादिच्छापूर्वं तुल्यान्तरप्राप्तिफलप्रयत्नानादररूप एव भेदः । न हि तत्र कङ्कणकणत्काराद्यर्थं प्रयत्नः । उदाहरणम्—

श्रीकश्मीरनरेन्द्रचन्द्र भवतः प्रत्यर्थिनो हन्त ते
प्रज्ञाकौशलशालिनोऽपि नितरां जाड्यं समभ्यागताः।
भूभर्तुः कटकाग्रतस्तव गता द्राक् सिंहनादाकुलाद्
भूभर्तुः कटकाग्रमेव च गता यत्सिंहनादाकुलम्॥ ३७५॥

अमन्दरागाकुलमानमस्य नेत्राञ्चलं सूचयतेऽन्यदेव।
मन्थक्षणेऽब्धेः कमलां विलोक्य जयत्यवस्थान्तरमच्युतस्य॥३७६॥

पूर्वत्र ससिंहनादकटकान्तरप्राप्त्यर्थं तत्तुल्यस्यावाप्तस्य त्यागेनानादरः। उत्तरस्मिन्नेत्राञ्चलान्तरचिकीर्षयारब्धस्यानादरः। आद्ये तु प्रौढोक्तिनिर्मिताप्रयत्नवैफल्याद् विचित्रालङ्कारसङ्कीर्णता। यथा च—

मअणाहिसामलेणं इअ गणिअ किं मुहं णलाडेण।
इच्छामि इमं तिणअणप्पणामकिणकालुअं वोढुं॥ ३७७॥
[ मृगनाभिश्यामलेनेति विचारिते किं मुखं ललाटेन।
इच्छामीदं त्रिनयनप्रणामकिणकलुपितं वोढुम्॥ ]

अत्र मृगनाभिश्यामलेन ललाटेन न सुखमपि तु किणकालस्य वतासुख (?)मित्यवगमादुक्तनिमित्तस्तुल्यानादरः। एवं पूर्वयोरपि जाड्यमन्दरागतादेर्निमित्तस्योक्तत्वमेव। अनुक्तनिमित्तं तु स्वयमनुसरणीयम्॥ ७०॥

## त्यक्तस्वीकार आदरः॥ ७१॥

अधिकगुणप्राप्तौ तुच्छत्वेन त्यक्तस्य तदपगमे पुनः स्वीकारस्त्यागमात्रेण वा पुनरुपादानमन्येन वा त्यक्तस्य ग्रहणमिति त्रिभेद आदर। यथा—

संपत्तिआ वि खज्जइ पण्णच्छेएसु पुत्ति को दोसो।
णिअपइणा वि रमिज्जइ परपुरिसविवज्जिए गामे॥ ३७८॥
[ संपत्तिकापि खाद्यते पर्णच्छेदेषु पुत्रि को दोषः।
निजपतिनापि रम्यते परपुरुषविवर्जिते ग्रामे॥ ]

अत्र पर्णपरपुरुषाद्यवाप्तौ स सम्पत्तिकानिजपत्योस्त्यक्तयोरपि पुनः पर्णाद्यलाभे स्वीकारः।

अविनोद्रकुलस्सदाधिकं यो मधुगण्डूषसमर्पणेन भृङ्गीः ।
स तदा गिरिजानयातिभृङ्गी मधुगण्डूषः सवताचकाङ्क्ष(?) ॥ ३७९॥

अत्र समर्पितस्य मधुगण्डूपस्य भृङ्गीभ्य एव स्वीकारः ।

श्रोणीविम्वं त्यजति तनुतां सेवते मध्यभागः
पद्भ्यां मुक्तास्तरलगतयः स्वीकृता लोचनाभ्याम् ।
धत्ते वक्षः कुचसचिवतामद्वितीयं तु वक्त्रं
तद्गात्राणां गुणविनिमयः कल्पितो यौवनेन ॥ ३८० ॥

अत्र श्रोणिविम्बादिना त्यक्तस्य तनुतादेर्मध्यादिना स्वीकारः । विनिमय-शब्दश्चात्र त्यक्तस्वीकारमात्राभिप्रायेण व्याख्येयः धर्मान्तरत्यागेऽपि तदनुपादानेन परिवृत्त्यभावात् । यथा वा—

यत्सशब्दमिति कामविमर्दे नूपुरं परिहरन्ति रमण्यः ।
तद्बभार कतरापि विदग्धा गोपनाय निजकण्ठरुतानाम् ॥३८१॥

अत्र नूपुरस्य कञ्चित्प्रति सूचकत्वेन दोषत्वेऽपि अन्यस्या विदग्धाया भणितगोपनेन गुणत्वमिति व्यत्यासानुप्राणितस्त्यक्तस्वीकारादर । यथा—

स काकपक्षानुगुणामवस्था तत्याज बालोऽपि नरेन्द्रसूनुः ।
अस्याहितैः कालिकया गृहीतैरङ्गीकृतः किंतु स काकपक्षः ॥३८२॥

अत्र काकपक्षस्य त्यक्तस्य स्वीकार । यथा कार्यकारणतया पर्यायविध्वंसाभावसम्बन्धासम्बन्धस्य सम्भवेऽपि विच्छित्त्यन्तरस्यावस्था......क्तित्वं तद्वदस्यापि पर्यायसम्भावनायां त्यागस्वीकारनिबन्धनस्य चारुतातिशयस्य सद्भावात्ततो भेदः । अत एवाथयोर्भेदयोर्गतस्य पुनरागमनाच्च प्रतिप्रसव । अत्यक्तस्य पुनरादरणीयत्वात्तस्य च प्रत्यापत्तिमात्ररूपस्य तदप्रयोजकत्वात् प्राधान्येनास्य वाक्यार्थत्वाच्च तस्याङ्गतैव । "सम्पत्तिआवि लज्जइ" इत्यादावगुणरूपस्यापि गत्यन्तराभावेनादरणीयत्वाच्च देशकालादिभेदेन दोषस्य गुणत्वमिति न सर्वत्र व्यत्यासेनाप्याक्रान्तविषयतैव ॥ ७१ ॥

## हेत्वन्तरादन्यस्यापि तथात्वमनुकृतिः ॥ ७२ ॥

केनचिन्निमित्तेन कस्मिंश्चिद्वस्तुनि कस्यापि रूपस्योदये निमित्तान्तरेणान्यस्यापि तादूप्यमनुकृतिः । यथा—

शरश्रेणीपातैस्तव विगलिते तत्र वपुषि
प्रवेशः शस्त्राणां कथमपि भटानां समभवत् ।
सुरस्त्रीनिर्मुक्तासमकुसुमधूलीहितदृश-
स्तवाप्यासीत्तेषु प्रहरणविलम्बः क्षणमपि ॥ ३८३ ॥

अत्र भटानां शस्त्रप्रवेशाभावात् प्रतियोद्धुश्च कुसुमरजसा व्याकुलितत्वात् प्रहरणविलम्ब इति द्वयोर्निमित्तभेदेनैकरूपत्वम् । यथा वा—

एकं दन्तच्छदस्य स्फुरति जववशादर्धमन्यत्प्रकोपात्
एकः पाणिः प्रणन्तुं शिरसि कृतपदः क्षेप्तुमन्यस्तथैव ।
एकं ध्यानान्निमीलत्यपरमविषहं वीक्षितुं चक्षुरित्थं
तुल्यानिच्छापि वामा तनुरवतु स वो यस्य सन्ध्याविधाने ॥३८४॥

अत्राधरस्फुरणादावेकत्र सन्ध्यावन्दनं निमित्तमपरत्र तज्जनितेर्ष्येति निमित्तभेदेन वामदक्षिणयोरुभयोस्तुल्यत्वम् । अस्य च सङ्घटितयोस्तुल्यत्वमित्येवंरूपतया तुल्ययोस्सङ्घटनात्समालंकाराद्भेदः ।

निशासु भास्वत्कलनूपुराणां यत्संचरोऽभूदभिसारिकाणाम् ।
नदन्मुखोल्काविचितामिषाभिः स वाह्यते राजपथः शिवाभिः ॥३८५॥

इत्यत्र यद्यपि राजपथस्य मणिनूपुरोपेताभिसारिकासञ्चरजनितयोस्सशब्दभास्वरत्वयोः शिवानिमित्तकत्वेनापि तादवस्थ्यं तथापि तयोर्निवृत्तयोः पुनरागमनाद् वक्ष्यमाणः प्रतिप्रसव एव । यत्र तु स्थितस्यैव रूपस्य निमित्तान्तरेणापि तथात्वं तत्र निमित्तान्तरस्यावस्थितोपोद्बलकत्वात्समाधिरेव यथा—

जं चेव मुउलणं लोअणाण रइरसवसेण णिम्माअं ।
अणुबद्धं तं चिअ कामिणीण णिद्दाणुबन्धेण ॥ ३८६ ॥

[ यदेव मुकुलनं लोचनानां रतिरसवशेन निर्मितम्।
अनुबद्धं तदेव कामिनीनां निद्रानुबन्धेन ॥ ]

अत्र रतिसुखनिमित्तकस्य नेत्रनिमीलनस्य स्थितस्य निद्रया दृढीकरणम्। तेन निवृत्तस्य पुनरागमनं प्रतिप्रसवः अनिवृत्तस्योपोद्बलेन समाधिरिति इहान्यस्यापीति सूत्रितं न तु सामान्यं न तस्यान्यस्य वेति।

परोऽपि च तथाविधो भवति चेन्निमित्तान्तरात्
तदानुकृतिरिष्यते यदि स एव भूयस्तथा।
प्रतिप्रसवभूरसावथ तदेव तस्यापि चेत्
तथात्वमपि कारणान्तरवपुस्समाधिस्त्वसौ ॥ ७२ ॥

प्राप्तस्य प्रतिबन्धः प्रत्यूहः ॥ ७३ ॥

हेत्वन्तरादित्यनुषज्यते। कुत्रचिन्निमित्तात्प्राप्तस्य हेत्वन्तरात् प्रतिबन्धः स प्रत्यूहः। लब्धरूपायाः क्रियाया अनुभवस्मृत्यादिप्रत्यूहरूपाद्व्यासङ्गादुत्पद्यमानकार्यप्रतिबन्धात्मकस्य व्यक्त एव भेदः। यथा—

पिनाकिनः सूतिषु सर्पिरर्पितं न यत्र नेत्राग्निबलाद्विलीयते।
किरीटकोटिगृहमेधिनो विधोः प्रभाभिराश्यानमिवोत्तरायणे ।३८७।

अत्र नेत्राग्निबलात्सर्पिर्द्रुतेः प्राप्ताया इन्दुप्रभारूपः प्रतिबन्धकः सम्भावनयोपनिबद्धः। सिद्धतया यथा—

दाहपसंगो अलिआणलेण पत्तो हरस्स ससिणो जो।
सुरसरिसलिलभरेणं सोमित्र सो विहडिओ झत्ति ॥ ३८८ ॥
[ दाहप्रसङ्गोऽलिकानलेन प्राप्तो हरस्य शशिनो यः।
सुरसरित्सलिलभरेण सौम्य विघटितो झटिति ॥ ]

अत्र दाहप्रवृत्तेः गङ्गाजलसंसर्गान्निवृत्तिः ॥ यथा—

तत्सेनाभटसिंहनादमभितः श्रुत्वा जगज्जाङ्घिकं
मूर्च्छां कामपि लेभिरे सरभसं सर्वे ककुप्कुम्भिनः।

यत्तु स्थैर्यलवं मुमोच न जवादैरावणः कारणं
तत्रोद्भ्रामरवीचिचक्रमुखरः पूर्वाश्रयो वारिभिः ॥ ३८९ ॥

अत्र मूर्च्छाहेतोः सिंहनादश्रवणस्यागन्तुकस्य प्रवृत्तेः शरणाब्धिसङ्गेन प्रतिबन्धः। पूर्वत्र प्रतिबद्धप्रतिबन्धयोर्द्वयोरप्यागन्तुकत्वम्। प्रतिबद्धप्रतिबन्धकयोः द्वयोस्तु आगन्तुकत्वमप्यूह्यम्। क्वचित्त्वसौ क्रियातिपत्तिसंकीर्णः। यथा—

तत्तत्ताण्डवडामरव्यसनिनो देवस्य चण्डीपतेः
ज्योतिस्तत्सविशालभालनयनोद्भूतं नमस्कुर्महे।
यत्तेजःप्रसरेण शोषमुदधिर्हन्तागमिष्यत्क्षणा-
दन्तः प्रज्वलदौर्वदाहसतताभ्यस्तोऽभविष्यन्न चेत् ॥३९०॥

अत्र ताण्डवक्षणे नयनज्योतिरुद्रेकस्य शोषहेतोरागन्तुकस्यान्तर्वर्तमानौर्वानलसङ्गेन प्रबन्धः।

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसां पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ३९१ ॥

इत्यादौ च हेतुप्रतिबन्धाभावेन शुद्धायाः क्रियातिपत्तेर्दर्शनान्न विषयापहारः। न च नेत्रानलादेः कारणस्य सद्भावेऽपि नयनादेः कार्यस्यानुत्पत्तिरिन्दुप्रभासन्निधानादुक्तनिमित्तामत्र विशेषोक्तिमेवोत्थापयति इत्याशङ्कनीयम्। वैकल्यप्रतिबन्धविरहितस्य वस्तुनः कारणत्वेन प्रतिबन्धकसन्निधाने कारणस्य सद्भावाभावात्। अत एव तस्यां सत्यपि कारणे कार्यानुत्पत्तेरनुपपन्नतया विरोधगर्भत्वम्। इह तु प्रतिबन्धकवशेन कारणाभावादनुपपत्तियोगान्न विरोधसंसर्ग इति प्रतीतिभेदात्सिद्ध एव भेदः।

प्रतिबन्धवशायाते फलाभावे विरोधधीः।
यत्रास्ति तेन प्रत्यूहो विशेषोक्तेः पृथक्कृतः ॥

अत्र च प्रतिबन्धकसद्भावेऽपि कार्यासक्तताया अविवक्षितत्वेन शब्दादप्रतीतेश्चाशक्यादपि वैलक्षण्यम् ॥ ७२ ॥

## स्थितस्यान्यथापत्तिः प्रत्यादेशः ॥ ७४ ॥

हेत्वन्तरादित्यनुगतम्। स्थितिश्च प्रवृत्तेर्निवृत्तेर्वेति द्विधा सती प्रवृत्त-प्रवर्तितत्वनिवृत्तनिवर्तितत्वभेदेन चतुर्धा। तेन कुतश्चिन्निमित्तात्स्थितस्य स्थापितस्य वा निवृत्तस्य निवर्तितस्य वा निवृत्तिः प्रवृत्तिश्च प्रत्यादेशः। क्रमेण यथा—

अंगाइं पणतुआइं किमवि किमवि गरइ महुमअविलासो।
हिअआइं लहूइं करेइ माणगरुआणि वि पिआणं ॥ ३९२ ॥
उच्चअरं दोलन्तीइ तुज्झ मण्णे णहप्पहादुमिणो।
अचिरेण सुअणु होहिइ पच्छाइअलंछणो चन्दो ॥ ३९३ ॥
[ अङ्गानि प्रतनुकानि किमपि गुरूकरोति मधुमदविलासः।
हृदयानि पुनर्लघूकरोति मानगुरुकाण्यपि प्रियाणाम् ॥
उच्चतरं दोलन्त्यास्तव मन्ये नखप्रभादूनः।
अचिरेण सुतनु भविष्यति प्रच्छादितलाञ्छनश्चन्द्रः ॥ ]

पूर्वत्राङ्गलघुत्वस्य मानगुरुत्वस्य च प्रवृत्तस्य मधुमदविलासनिमित्तिका गौरवलाघवापादानप्रतिपादनद्वारा निवृत्तिरभिहिता। अत्र च गुरोर्लघुत्वं लघोश्च गुरुत्वमिति विपर्ययच्छायासंकीर्णतापि। उत्तरत्र च लाञ्छनस्य प्रवृत्तस्य निवृत्तिर्नखप्रभाच्छादनमुखेन सम्भावितेति प्रतिभालिङ्गितत्वम्।

एगे कुणन्ति छिद्दं पअइविसुद्धे वि णिम्मले रअणे।
अण्णे महाणुहावा गुणेहिं तं चेअ पूरेंति ॥ ३९४ ॥
[ एके कुर्वन्ति च्छिद्रं प्रकृतिविशुद्धेऽपि निर्मले रत्ने।
अन्ये महानुभावा गुणैस्तदेव पूरयन्ति ॥ ]

अत्र प्रवर्तितस्य च्छिद्रस्य गुणपूरणमुखेन निवृत्तिरुपनिबद्धा।

कुविआ वि परम्मुहाणं थोवं पासिआणमेगसअणम्मि।
पूरिज्जइ रोमञ्चोग्गमेण दोण्हं पि ओआसो ॥ ३९५ ॥
[ कुपित्वापि पराङ्मुखयोः स्तोकं प्रसृतयोरेकशयने।
पूर्यते रोमाञ्चोद्गमेन द्वयोरप्यवकाशः ॥ ]

अत्र कोपातिशयादपगतस्यान्योन्यमङ्गस्य रोमाञ्चोद्गमवशेन प्रवृत्तिः ।

लावण्यकान्तिरमला मलिनात्र माभू–
दित्याशयेन विलिलेख न पत्रलेखाम् ।
अत्याययत्पुनरिमां (?) प्रतिमागतेन्दु–
बिम्बप्रभाधिकतरे तरुणीकपोले ॥ ३९६ ॥

अत्र पत्रलेखालेखनमुखेन लावण्यग्रासस्य निवारितस्य प्रतिमेन्दुप्रभामुखेन प्रवृत्तिः । अत्र च एकस्यैव दोषस्य निवृत्तौ दोपान्तरोदयात् तुल्यमपि ।

## उपोद्बलनं समाधिः ॥ ७५ ॥

स्थितस्येत्यनुवर्तते । षष्ठी चात्र कर्मणि कर्तरि वा । तेन स्थितस्यागन्तुकेनागन्तुकस्य स्थितेन वा कारणस्य कार्यजननप्रवृत्तस्य कारणान्तरेण कार्यस्यार्थान्तरस्य वान्येनोपबृंहणं समाधिः । यथा–

मानमस्या निराकर्तुं पादयोर्मे पतिष्यतः ।
उपकाराय दिष्ट्येदमुदीर्णं घनगर्जितम् ॥ ३९७ ॥

अत्र प्रसादनाय पादपतनाख्यस्य कारणस्य स्थितस्य मानस्य निराकरणार्थं कृतप्रयत्नस्यागन्तुकेन घनगर्जितेन कार्यसौकर्यकारितया परिपोषणम् । यथा वा—

सोवाणारोहणपरिस्समेण काए वि जे विणिस्सरिआ ।
ते च्चिअ हरिदंसणवइअरेण सासा ण विच्छिण्णा ॥ ३९८ ॥
[ सोपानारोहणपरिश्रमेण कस्या अपि ये विनिःसृताः ।
त एव हरिदर्शनव्यतिकरेण श्वासा न विच्छिन्नाः ॥ ]

अत्रारोहणपरिश्रमादुत्पन्नाः श्वासाः कार्यरूपा हरिदर्शनेन कारणान्तरेणोपोद्बलिताः । न तु सोपानारोहणरूपस्य कारणस्योपोद्बलनं सोपानारोहणस्यातीतत्वात् । एतच्च " न विच्छिन्नाः " इत्यतोऽवगतम् । तेन कारणान्तरयोगात् कार्यसौकर्यमित्येवमादावव्यापकं लक्षणम् ।

हिन्दोलणोच्छवे सुंदरीण जे सेअविन्दुणो पडिआ।
वेगतुडिएण हारेण ताण माहप्पमुच्छलिअं ॥ ३९९॥
[ दोलोत्सवे सुन्दरीणां ये स्वेदबिन्दवः पतिताः।
वेगत्रुटितेन हारेण तेषां माहात्म्यमुच्छलितम् ॥ ]

अत्र कार्यभूतानां स्वेदबिन्दूनां हारमुक्ताभिरुपोद्बलनम्।

चञ्चत्कटाक्षभ्रमराभिरामरामामुखाम्भोजपरम्पराभिः।
इतस्ततः यत्र सरांसि शोभां घर्मप्रसादाद्द्विगुणामवापुः ॥४००॥

अत्र मुखैरम्भोजशोभाया उपोद्बलनं कृतम्।

स्त्रैणं लीलाभरणमभितस्त्रोटयित्वा श्रमाम्भः-
सक्त्या पत्रावलिमृगमदव्यञ्जितश्मश्रुलेखः।
केलिक्षोभः कुवलयदृशां मान्मथे कार्यभावे
पुंवद्भावं घटितमभितः पारिपूर्ण्यं निनाय ॥ ४०१ ॥

अत्र विपरीते रते पुंवद्भावः प्रवर्तितः केलिक्षोभेण स्त्रीसमुचितलीलाभरणत्रोटनेन श्रमाम्भोविगलितमृगमदपत्रावलिद्वारा श्मश्रुलेखाव्यञ्जनेनोपबृंहितः।

तरलेऽस्तमिते सितद्युताविह दोलायितमीक्षणद्वये।
लिखितागुरुपत्रलेखयोस्तिमिरं मूर्च्छति ते कपोलयोः ॥४०२॥

अत्र कृष्णागुरुपत्रलेखाविचित्रितकपोलसंसर्गेण तमःस्वरूपस्योपबृंहणम् ॥ ७५ ॥

## विशेषस्यान्येन समर्थनमर्थान्तरन्यासः ॥ ७६ ॥

यत्र विशेषोऽभिहितः सामान्येन व्याप्तिप्रदर्शनरूपतया समर्थ्यते स्थिरीक्रियते सोऽर्थान्तरन्यासः। इहार्थोपबृंहकत्वेन कदाचित्कारणस्य कार्यस्य वोपादानं क्वचिद्विशेषस्य क्वापि सामान्यस्य। तत्र कार्यकारणयोरुपादानकत्वेनोपबृंहकत्वं वक्ष्यमाणनीत्या हेत्वलंकारः। विशेषस्य सामान्यं प्रति प्रतीति-

विषदीकरणरूपतयोपबृंहकत्वे सामान्योद्दिष्टानामेकस्य निदर्शनमुदाहरणमित्युदाहरणालंकारः। स चोपमाप्रस्तावे इवाद्युपादानेन शाब्द उदाहृतः। अनुपादाने तु समानन्यायत्वादार्थस्स एव न त्वर्थान्तरन्यासः। यतो न व्याप्तिप्रदर्शनरूपं समर्थनं विशेषकार्यकारणानामस्ति प्रतीतिविशदीकरणात्मकं च सामान्यादेर्हेतुत्वेनोपादानाख्यं च विशेपसामान्ययोरिति सर्वत्रैकलक्षणानुविधानाधिगमाभावादलङ्कारभेद एव। तेन विशेषस्यैव सामान्येन व्याप्तिदर्शनेन दार्ढ्योपादानमर्थान्तरन्यासः। अयं साधर्म्यवैधर्म्याभ्यां द्विविधः सन् हिशब्दाद्युपादाने शाब्दः तदभावे त्वार्थ इति चतुर्विधः। व्याप्तिप्रदर्शनस्य तु पूर्वपश्चाद्भावेन वैचित्र्याभावान्न भेदहेतुत्वम्। क्रमेण यथा—

सरलाण पअइकठिणा मज्झं लद्धूण किंव ण कुणंति।
जं थणएहिं मुआणं अण्णोण्णविलोअणं पिहिअं॥ ४०३॥
[ सरलानां प्रकृतिकठिना मध्यं लब्ध्वां किमिव न कुर्वन्ति।
यत्स्तनैर्भुजानामन्योन्यविलोकनं पिहितम्॥ ]

अत्र स्तनभुजलक्षणस्य विशेषस्य प्रस्तुतस्य सरलानामित्यादिस्सामान्यरूपोऽर्थो प्रस्तुतः। पूर्वं समर्थकतयोपात्तः। यच्छब्दोपादानाच्च शाब्दत्वम्।

योऽसौ जात्या चरणरहितोऽनूरुरन्वर्थनामा
चित्रं सोऽयं तपन भवता सारथित्वे नियुक्तः।
पादाघातैश्शममुपनयन्ध्वान्तमारोहति द्यां
सेवासङ्गात्किमपि महतां यान्ति तुच्छा महत्त्वम्॥ ४०४॥

अत्रानूरोरर्कप्रसादाद्वियदाक्रमणे सामान्यं सधर्मकतया पश्चात्समर्थकम्। यद्यप्यत्र महत्सेवा कारणरूपा तुच्छोत्कर्षस्योपबृंहकतयोपात्ता तथापि न हेत्वलंकारः। कारणस्य सामान्यावलम्बनेनैव समर्थकतयोपादानात्। एवमन्यत्र कार्यस्य कारणस्य वा सामान्यद्वारेण समर्थकत्वमर्थान्तरन्यास एवेति विज्ञेयम्।

जेण परक्कमणिहिणा अक्कमिओ सत्तसाअरुद्देसो।
ण हु काअराण ढुक्कइ ओआसो णिअघरेसुं पि॥ ४०५॥
[ येन पराक्रमनिधिना आक्रान्तः सप्तसागरोद्देशः।
न खलु कातराणां ढौकतेऽवकाशो निजगृहेष्वपि॥ ]

अत्र सप्तद्वीपाक्रमणस्य विशेषस्य कातराणां निजगृहे रत्यभावः सामान्यात्मा न खल्विति शाब्दतया वैधर्म्येण समर्थकः।

विधाय भूमेस्तलमस्तकण्टकं ववर्ष हेम्ना समं हर्षमर्थिनाम्।
अकुर्वतामर्थिजनार्तिखण्डनं वृथा तडित्पल्लवचञ्चलाः श्रियः॥४०६॥

अत्र विधर्माणां सामान्येन समर्थनम्। क्वचिदध्यवसायगर्भोऽपि भवति यथा—

उदिते भास्करे क्वापि गम्यते तिमिरोत्करैः।
तेजस्विनमनालोक्य प्रभवन्ति मलीमसाः॥ ४०७॥

अत्र तेजस्विमलीमसरूपोऽर्थोऽभेदेनाध्यवसितस्सामान्यरूपवैधर्म्येण समर्थकः। एवं सामान्यविशेषसमर्थकतायामर्थान्तरन्यासत्वेन विशेषस्य विशेषान्तरसमर्थनं प्रतिवस्तूपमादृष्टान्तयोरेव विषयो नार्थान्तरन्यासस्य। ततश्च अथवा "न चित्रमेतद्दहंति हिमानी हि भूमिरहमि"त्यादौ (?) विशेषस्य विशेषान्तरेण समर्थनात्साहृपे( प्ये )णाप्यय भवति इति न वाच्यम्। चित्रत्वस्याभिहितस्याथवा न चित्रमित्यादिनोऽभूहनेनाभिहितसमर्थनासम्भवाच्च। अत एव विहितनिषेधादेवमादौ निश्चयालङ्कारहेतुकमेव चारुत्वं नार्थान्तरन्यासात्।

णिद्दोसो ण हु कोइ वि ण हु कोइ वि सव्वहा गुणविमुक्को।
खीरसमुद्दे वि विसं रअणाणि वि विसहरसिरेसु॥ ४०८॥
[ निर्दोषो न खलु कोऽपि न खलु कोऽपि सर्वथा गुणविमुक्तः।
क्षीरसमुद्रेऽपि विषं रत्नान्यपि विषधरशिरःसु॥ ]

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते ।
असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गलिः ॥ ४०९ ॥

इत्यादौ पुनरुक्तनीत्या सामान्यविषयायाः प्रतीतेस्सधर्मेणा विधर्मेणा च विशेषेण विषदीकरणे उदाहरणस्यैवार्थत्वम् । कार्यादिना यदन्यस्य विशेषस्य यदन्येनोपादानं हेतुः सोऽर्थान्तरन्यासः ।

सामान्यस्य विशेषाद् विषदीकरणं वितन्यते येन ।
आर्योदाहरणं स्यात्तत्रेवादिप्रयोगविरहेण ॥

इति विवेकः ॥ ७६ ॥

सर्वथा सम्भवोऽसम्भवो वा व्याप्तिः ॥ ७७ ॥

यत्र समग्रपक्षावलम्बनेऽपि कस्यचिदर्थस्य सम्भवः असम्भवो वा निबध्यते सा समग्रपक्षव्यापनाद् व्याप्तिः ।

वर्जनीयो मतिमता दुर्जनः सख्यवैरयोः ।
श्वा भवत्यपकाराय लिहन्नपि दशन्नपि ॥ ४१० ॥

अत्रोभयोरपि पक्षयोर्वर्जनीयत्वोपघातयोस्सम्भवः । यथा वा—

भूभारोद्वहनाय वाहनजटाबन्धाय वा श्रीपते-
र्निद्रालोः शयनाय वा परवशं स्वात्मानमुद्भावयन् ।
यं स्वातन्त्र्यनिधिं निरूप्य फणिनामग्रेसरः सोऽप्यहो
पातालप्रभुरस्मि कर्मपुरुषोऽहं त्वित्यहंतां जहौ ॥ ४११ ॥

अत्र भूभारोद्वहनाद्यनेकपक्षाश्रयणेऽपि परवशत्वस्य सम्भवः । यद्यपि चैवमादौ साकल्यस्य सम्भावना तथापि सम्भवस्य सर्वपक्षव्यापनाद् व्याप्तिरेव प्रधानम् । न हि तत्र सर्वपक्षव्यापनं प्रयोजकम् ॥ असम्भवे यथा—

आसीत्तस्य समुत्सुकः सुरपतिः सङ्ग्रामसन्दर्शने
सेहे तत्र न गाढपीडितधनुष्टंकारमुच्चैश्च यः ।
आरूढः सुरवारणं रणरसक्रुद्धेभगन्धग्रहात्
तेनाप्येष पलायनप्रणयिना दूरं समुत्सारितः ॥ ४१२ ॥

अत्रोभयथापि सङ्ग्रामासम्भवः । अत्र च यद्यपि सुरचारणारोहादिरूपस्य प्रयत्नस्य विफलत्वाद् विचित्रालंकारस्तथाप्युभयथाप्यसम्भवस्य वाक्यार्थीभूतत्वेन तत्संकीर्णता व्याप्तेः । यथा च—

ठाऊण जइ णिरिक्खइ ता से पुरओ णरिन्दओ चलिओ ।
जइ धावइ ता वरई थणजहणकअत्थिआ खलइ ॥ ४१३ ॥

[ स्थित्वा यदि निरीक्षते तदस्याः पुरतो नरेन्द्रश्चलितः ।
यदि धावति तद्वराकी स्तनजघनकदर्थिता स्खलति ॥ ]

अत्र द्वयोरपि पक्षयो राजदर्शनासम्भवः । यथा च—

यदि स्मरामि तन्वङ्गीं जीविताशा कुतो मम ।
यदि विस्मृत्य जीवामि जीवितव्यसनेन किम् ॥ ४१४ ॥

अत्र स्मरणविस्मरणपक्षयोर्निवृत्तेरभावः । एतेष्वसम्भवोऽर्थादवगम्यते । शब्दोपात्तो यथा—

अदृष्टे दर्शनोत्कण्ठा दृष्टे विच्छेदभीरुता ।
नादृष्टेन न दृष्टेन भवता लभ्यते सुखम् ॥ ४१५ ॥

अत्र दर्शनादर्शनयोस्सुखस्यालाभः ।

अस्यामखिलपक्षेषु संभवासम्भवस्थितिः ।
तुल्ये समग्रपक्षेषु न तु व्याप्तिर्विवक्षिता ॥
आसीत्तुल्येप्येवमादौ तदित्थं
संग्रामसन्दर्शनव्याप्त्यभावात् ।
नोचेद्व्याप्तिस्तुल्यमेवास्तु तस्माद्
व्याप्तेः शुद्धा दृष्ट इत्यादिभूमिः ॥ इति विवेकः ॥ ७७ ॥

साधनात्साध्यप्रतीतिरनुमानम् ॥ ७८ ॥

यत्राप्रतीतोऽर्थस्साध्यरूपस्साधनाच्छाब्देनार्थेन वा वृत्तेन स्वयमवगम्यते तदनुमानम् । क्रमेण यथा—

चण्डीशकोदण्डमथाप भङ्गं सत्यप्रभावाज्जनकात्मजायाः ।
जगाम रामस्तदसन्निधानात् खेदं यदाखण्डलकार्मुकेऽपि ॥ ४१६ ॥

अत्र चण्डीशकोदण्डं प्रति जानक्याः कारणत्वं साध्यम् । तद्वियुक्तस्य रामस्येन्द्रधनुषि तादृशकार्यानुपपत्त्या दण्डापूपिकयानुमीयते । तथा च यस्यैन्द्रधनुषि कुण्ठितत्वं स कथं चण्डीशकोदण्डभङ्गं कुर्यात् । यथा च—

मुग्धाक्षि नूनमधुना त्वदपाङ्गकेलि-
वातायने वसति कार्मुकलोकपालः ।
कर्णावतंसकुसुमोपनिबद्धवासस्-
सेवापरो यदिह षट्पदगायनोऽयम् ॥ ४१७ ॥

अत्र गायनसेवकाद् रूपकाद्यदर्शनात्सेवनीयकार्मुकलोकपालावस्थितिः कारणरूपानुमीयते । अत्र च यद्यपि मुग्धाक्ष्याः सम्बोध्यमानत्वं तथापि न परार्थानुमानरूपो हेत्वलंकारः । स्वयं प्रमाणान्तरेण प्रतिपन्नं वस्तु परस्यानवगतं प्रतिपाद्यते तत्परार्थानुमानम् । अत्र तु महासेवकदर्शनात्कार्मुकलोकपालावस्थितिरवगतेति प्रतिपत्तिप्रतिपादनं न तु परेणानवगतस्य, प्रत्येयस्य वस्तुनः प्रतिपादनम् । एवं च वस्तुप्रतिपादनतात्पर्याभावात्परेण वस्तुनः प्रतिपत्तौ अप्रतिपत्तौ वा प्रतिपत्तिप्रतिपादनस्य विशेषाभावात् परेणानवगतत्वमप्रयोजकमित्यनुमानमेव । एवमुदाहरणान्तरेष्वभ्यूह्यम् ।

परेणाप्रतिपन्नस्य वस्तुनः प्रतिपादनम् ।
परानुमानरूपो हि हेत्वलङ्कार इष्यते ॥
मयायं प्रतिपन्नोऽर्थ इति यत्र निवेद्यते ।
तत्रानुमानं तेन स्यात्प्रतिपत्तिनिवेदनम् ॥

इति सङ्ग्रहः । अनयोश्च हेत्वर्थस्य यदादेरुपादानाच्छाब्दं साधनत्वम् ।

वण्णवसिए विअत्थसि सच्चं विअ सो तुए ण संभविओ ।
ण हु होन्ति तम्मि दिट्ठे सुत्थावत्थाइँ अंगाइँ ॥ ४१८ ॥

[ वर्णवशिते विकत्थसे सत्यमेव स त्वया न सम्भावितः ।
न खलु भवन्ति तस्मिन् दृष्टे स्वस्थावस्थान्यङ्गानि ॥ ]

अत्र नायकदर्शनाख्यस्य कारणस्य तत्कार्यशरीरास्वास्थ्यविरुद्धस्वास्थ्योपलम्भेनाभावोऽवसितः । अत्रान्यदृष्टवती मदर्शनं ज्ञातत्वान्न ज्ञाप्येतेत्यदर्शनत्वयोगोऽपि तदस्माभिरवगतमिति प्रतिपत्तिप्रत्यायनमेव । यथा च—

न जाता रागसर्वस्वसमाप्तिरिति चेद्विधेः ।
किं पाण्डुराणि पद्मानि तेन सृष्टानि कानिचित् ॥ ४१९ ॥

अत्र केषुचित् पद्मेष्वरक्तत्वाख्यकार्यविरुद्धपाण्डुरत्वोपलब्ध्या कारणरूपस्य रागस्यासम्भवोऽनुमितः । उभयत्रेह शब्दाद्यनुपादानात्साधनस्यार्थत्वम् । अस्याश्च गाथायास्तूपचारादिविरहेण विशुद्धत्वेऽपि विच्छित्तिविशेषसद्भावाद्धारत्वम् । अन्येषु त्वतिशयोक्त्यादिगर्भत्वेन विच्छित्तिविशेषाभावे तु तर्कानुमानवशालंकारत्वम् । यथा—

यो यत्कथाप्रसङ्गे छिन्नभिन्नायतोष्णनिश्वसितः ।
स भवति तं प्रतिरक्तस्त्वं च तथा दृश्यसे सुतनु ॥४२०॥

एवं हेत्वलंकारादौ ज्ञेयम् ।

यत्रैता लहरीचलाचलदृशो व्यापारयन्ति भ्रुवं
यत्तत्रैव पतन्ति सन्ततममी मर्मच्छिदो मार्गणाः ।
तच्चक्रीकृतचापमञ्चितशरः प्रेङ्खत्करः क्रोधनो
धावत्यग्रत एव शासनधरः सत्यं सदासां स्मरः ॥ ४२१ ॥

इत्यादौ तु प्रौढोक्त्युल्लिखितत्वेन शासनधरत्वशरपतनाद्यसम्बन्धेपि सम्बन्ध इत्यतिशयोक्तिमूलत्वादलंकारान्तरं विविक्तमिति न वाच्यम् ॥ ७८ ॥

## परप्रत्यायकं लिङ्गं हेतुः ॥ ७९ ॥

परानवगतस्य वस्तुनः प्रतिपादकं गमकरूपं लिङ्गं हेतुः । परग्रहणमनुमानवैलक्षण्यार्थम् । तेन स्वयं लिङ्गात्प्रतिपत्तिरनुमानम् । लिङ्गेन परप्रत्यायनं परार्थानुमानरूपं काव्यलिङ्गपर्यायो हेत्वलंकारः । यद्यप्यनुमानस्यैव स्वार्थ-

परार्थरूपत्वेन द्वैविध्यं तथापि प्रतिपादितरूपेण प्राच्यैः पृथग्लक्षितः तथैवेहापि लक्षणम्। यत्तु परैरप्रतीतप्रत्यायकादनुमाना.. ......प्रतीतस्यार्थस्योपपादकत्वाद्वैलक्षण्यमुक्तम्। तदसदेतत्। तथा हि किं वक्त्रा प्रतीतस्यानुमानस्योपपादकं लिङ्गमुत बोद्धव्येन। तत्र नाद्यः। वक्त्रोपपत्तिसहितस्यैवार्थस्य प्रमाणान्तरेण प्रतिपन्नत्वादाकांक्षाभावात्। न हि स्वोक्ताद्वाक्यादाकांक्षोपरमति स्वाश्रयप्रसंगात्। नापि द्वितीयः। बोद्धव्येनापि प्रमाणान्तरेणाप्रतिपन्न एवार्थः। तस्मादेव वाक्यादवगतत्वेन प्रतीतिरूपादनुभवात् प्रतीतोपपादकं काव्यलिङ्गमप्रतीतप्रत्यायकमनुमानमिति अविवेक एवेति यथोक्तमेव वैलक्षण्यं साधीयः। अस्य च पदवाक्यार्थरूपतया लिङ्गस्य द्विविधत्वम्।

प्रजानां विनयाधानाद्रक्षणाद्भरणादपि।
स पिता पितरस्तासां केवलं जन्महेतवः ॥ ४२२ ॥

इत्यादौ पितृत्वस्य कारणस्य विनयादानादिः कार्यरूपः शाब्दो हेतुत्ववैचित्र्यावह इति पदार्थस्यार्थमेव हेतुत्वम्। वाक्यार्थस्य तु शाब्दमार्थं वेति त्रयो भेदाः। क्रमेण यथा—

वक्षस्थली रक्षतु सा जगन्ति जगत्प्रसूतेर्गरुडध्वजस्य।
श्रियोऽङ्गरागेण विभाव्यते या सौभाग्यहेम्नः कषपट्टिकेव ॥४२३॥

अत्र वक्षस्थल्या जगद्रक्षकत्वं जगत्प्रसूतित्वं कारणरूपं पदार्थो हेतुः। पितुर्हि निजप्रसूतेर्वक्षसि लालनमुचितम्। न चात्रासम्भवमात्रेण गरुडध्वजविशेषणत्वे जगत्प्रसूतित्वस्य पर्यवसिते पर्यवसानाद्वाक्यार्थस्य रक्षणौचित्यं वक्षःस्थल्या एव जगत्प्रसूतित्वादित्यर्थान्तरस्य व्यंजनव्यापारगम्यत्वात् ध्वनिरिति वाच्यम्। यतो व्यङ्ग्यस्यापि तस्य वक्षःस्थलीरक्षणरूपवाच्यार्थहेतुत्वेन वाच्योपस्कार्याङ्गत्वात् गुणीभूतस्य अलंकार्यत्वाभावादलङ्कारत्वमेव। एवंविधप्रतीयमानार्थगर्भीकारभावेन पुनः

संजीवणोसहिं पिव सुअस्स रक्खइ अणण्णवावारा।
सासू णवब्भदंसणकण्ठागअजीविअं सुण्हं ॥ ४२४ ॥

[ संजीवनौषधिमिव सुतस्य रक्षत्यनन्यव्यापारा ।
श्वश्रूर्नवाभ्रदर्शनकण्ठागतजीवितां स्नुषाम् ॥ ]

इत्यादौ कण्ठागतजीवितत्वादेर्विशेषणस्यार्थेऽपि रक्षणादिहेतुत्वं सर्वत्रोक्तम् । विशेषणतया हेतोरभिधानसम्भवाद्वैचित्र्याभावे नालङ्कारत्वमिति विचारनिपुणाः । अस्य च हेतुत्वादिरूपं वाच्यमर्थं प्रति व्यङ्ग्यस्योपस्कारकत्वमित्येवंलक्षणात्परिकराद् व्यङ्ग्योपस्कृतस्य वाच्यस्यैव तमेव प्रति हेतुता न स्वत इत्येवमात्मकस्य भेदोऽवसेयः ।

वाच्योपस्कारकता व्यंग्यस्य सदैव परिकरे ज्ञेया ।
व्यंग्याश्लिष्टो वाच्यो वाच्यं प्रत्येव हेतुरिति ॥ सक्षेपः ।

अयि प्रमत्ते सिचयं गृहाणेत्युक्तापि सख्या न विवेद काचित् ।
मग्ना हि सा तत्र रसान्तराले यत्रान्तरङ्गो भगवाननङ्गः ॥ ४२५ ॥

अत्र वेदने कार्ये रसान्तरमग्नत्वं कारणरूपं हि शब्दोपादानात् शाब्दो हेतुः । अत्रैव रसशब्दस्य जलवाचित्वे जलमध्यनिमग्नत्वस्योक्त्या न वेदनमुचितमिति शब्दशक्तिमूलं व्यंग्यमभेदाध्यवसायात् हेतुत्वेन प्रतीयते । यथा वा

संकल्पतुल्यो न बभूव बन्धुः शत्रुः सुगात्र्या न च तत्समानः ।
असूत्रयत् दुर्लभकान्तसंगमनङ्गमुत्पाद्य च यद् बबाधे ॥४२६॥

अत्र बन्धुत्वशत्रुत्वयोः कारणयोः कान्तसङ्गमसूत्रणादिः कार्यरूपो यच्छब्दोपादानेन शाब्दो वाक्यार्थहेतुः ।

अन्यतो नय मुहूर्तमाननं चन्द्र एष सरले कलामयः ।
सा कदाचन कपोलयोत्पलं संक्रमय्य समतां समेष्यति (?) ॥४२७॥

अत्र अन्यतो मुखनयनविरुद्धानयनकार्यं साम्यापादकं फलसंक्रमणरूपं हेतुतयोपात्तमिति विरुद्धकार्योत्पत्तिः । आर्थं लिङ्गं यथा

हरिहिइ पिअस्स णवचूअपल्लवो पढममञ्जरिसणाहो ।
मा रुवसु पुत्ति पत्थाणकलसमुहसंठिओ गमणं ॥ ४२८ ॥

[ हरिष्यति प्रियस्य नवचूतपल्लवः प्रथममञ्जरीसनाथः ।
मा रुदिहि पुत्रि प्रस्थानकलशमुखसंस्थितो गमनम् ॥ ]

अत्र निषिध्यमानस्य रोदनस्य कार्यायाः प्रस्थाननिवृत्तेः चूतपल्लवाख्येन कारणान्तरेण जन्यत्वमिति कारणस्य आर्थो हेतुः । अयं चानुमानहेत्वलंकारयोर्विचार आश्र(य)णीयो यत् उत्सर्गत एव शब्दोच्चारणस्य परार्थत्वात्परस्य संबोधनीयत्वाभावेऽपि पदवाक्यार्थरूपस्य लिङ्गस्य परप्रत्यायकत्वेन हेत्वलङ्कारः । यत्र तु जाने नूनमित्यादि पदप्रयोगमहिम्ना स्वप्रतिपत्तिनिश्चयः तत्रानुमानम् । क्वचित्तु " परिम्लानं पीनस्तन " इत्यादौ स्वपरामर्शानिश्चये हेत्वलङ्कारो युक्त इति ॥ ७९ ॥

अनिष्टापादनमापत्तिः ॥ ८० ॥

कस्यचित्किञ्चित्कुर्वतो यदनिष्टमापद्यते सा प्रसङ्गात्मिकानिष्टस्यापादनादापत्तिः । यथोक्तं "पराभ्युपगतेन परस्यानिष्टापादनं प्रसङ्ग" इति । इह च पराभ्युपगतेन परस्येति न सूत्रितम् । अनिष्टापादानमिति णिजर्थपर्यालोचनयार्थादेवावगतेः । उत्तरत्र तु विच्छित्यन्तरेण प्रसङ्गसंज्ञकस्यालङ्कारान्तरस्य लक्षयिष्यमाणत्वादिहायस्याभिधानम् । प्रसङ्गस्य परार्थानुमानात् तन्निमग्नत्वेऽपि साधनात्मकात्तस्मादनिष्टापादनात्मकतया दूषणात्मकस्य विच्छित्यतिशयत्वेन पृथगभिधानम् । तथा चानुमानहेत्वलङ्काराभ्यां नूनमित्यादिभावेन विलक्षणैव प्रतीतिः ।

अनुमानादेरस्याः साधनरूपश्च दूषणत्वजुषः ।
आपत्तेस्तुल्यत्क्तो भेदो ज्ञेयः प्रसङ्गरूपाख्यः ॥

इति भेदः । उदाहरणम्—

गृहमध्यनिखातेन धनेन धनिनो यदि ।
भवामः किं न तेनैव धनेन धनिनो वयम् ॥ ४२९ ॥

अत्रानुपयोगिना धनेन कृपणा यदि धनिनस्तदस्माकमपि तस्मिन् धने स्वामित्वं प्रसक्तम् । यथा च—

मा होहि तरुणि दइए चिरेण आओत्ति माणमन्थरिआ ।
अण्णह सो विरहग्गिम्मि गओ वि तहा गओ श्चेव ॥ ४३० ॥

[ मा भव तरुणि दयिते चिरेणागत इति मानमन्थरिता ।
अन्यथा स विरहाग्निगतोऽपि तथा गत एव ॥ ]

अत्रानिष्टस्य विरहाग्नेर्गतस्य पुनरागमनापादनाद्यतिप्रसवङ्कीर्णता । यथा च—

स्वर्णं स्वर्णमितस्ततो नरि नरि द्राग्दीयतां दीयतां
इत्यद्यापि हि सोमपाल विरम त्वं कोऽपि गर्भेश्वरः ।
नोचेदात्मभयाज्ज्वलिष्यति रयान्मेरुस्ततः क्व प्रजा
क्व क्षोणी क्व पयोधयः क्व गिरयः क्वाशाः क्व तेऽप्यर्थिनः ॥४३१॥

अत्र संभावितादर्थानुग्रहाद्विरुद्धस्यार्थापघातस्योत्पत्तिरिति विशेषालङ्कारानुप्राणिता अर्थिनां स्वर्णदानादिसमभिव्याहारोऽनुग्रहाय क्रियमाणस्तेषामेवाद्रिविघटनमुखेनापघाताय पर्यवस्यतीति क्व तेऽप्यर्थिन इत्यनिष्टापादनादापत्तिरेव वाक्यार्थीभूता ।

त्वं चेत् संचरसे वृषेण लघुता का नाम दिग्दन्तिनां
व्यालैः कङ्कणभूषणानि कुरुषे हेम्नो न काचित् क्षतिः ।
धत्से चेत् शिरसा जडांशुमयशः किं नाम लोकत्रयी-
दीपस्याम्बुजवल्लभस्य जगतामीशोऽसि किं ब्रूमहे ॥ ४३२ ॥

इत्यत्र तु दिग्गजादीनां न लघुत्वादिकमपि त्वनुचितकारित्वं तवैवेत्यर्थात्प्रतीयते । इत्यनिष्टापत्तेरार्थता ॥ ८० ॥

## दण्डापूपिकयापतनमर्थापत्तिः ॥ ८१ ॥

मूषकैर्दण्डानां भक्षणेऽपूपभक्षणमर्थात् सिद्धमिति न्यायो दण्डापूपिका । अनेन न्यायेन कस्यचिदर्थस्य निष्पत्तावर्थादर्थान्तरस्यापत्तिरिति । अस्याश्च प्रकृताप्रकृतस्याप्रकृतात्तथाविधस्य प्रकृतादन्यस्य विपर्ययेण वार्थादर्थान्तरस्यापत्तिरिति चत्वारो भेदाः । प्रत्येकमर्थान्तरस्य साम्यं न्यूनताधिकत्वं वेति द्वादश भेदाः । तत्रापि संभवेऽसंभवोऽसंभवे च सभव इति चतुर्विंशतिः । अत्रापि शाब्दत्वार्थत्वादिभेदाद्बहवो भेदाः । दिङ्मात्रं यथा "शुद्धान्तदुर्लभम्"

इत्यादि । अत्र वपुवृत्तान्ताप्राकरणिकाल्लतावृत्तान्तस्य तथाविधस्यैव समस्यापतनम्। अत्र च आश्रमवासिनो लोकोत्तरत्वसंभवे लतानामपि तुल्यत्वात्संभवो युक्त एव । एवमुत्तरत्र।

सण्णिहिअभुजंगाओँ वि चन्दणलइआओँ जो थरथरेइ।
कह सो विओइणीणं कुणइ ण मलयाणिलो कम्पं ॥ ४३३ ॥
[ सन्निहितभुजङ्गा अपि चन्दनलतिका यः कम्पयति कथं सः।
वियोगिनीनां करोति न मलयानिलः कम्पम् ॥ ]

अत्र चन्दनलताकम्पनात्प्रकृताद्वियोगिनीकम्पनस्याप्यप्रकृतस्यापतनम्।

जितश्चेन्मृगशावाक्ष्या सकलोऽपि सुधाकरः।
का शक्तिर्जलजस्य स्याद्विकलस्य शिलीमुखैः ॥ ४३४ ॥

अत्र मृगाक्षी प्रति व्यतिरेकोपमानतयोपात्तस्य प्राकरणिकस्य सुधाकरस्य जयाज्जलजस्य तथाविधस्यैवार्थाज्जय इत्यर्थादापतितम्। अत्र सुधाकराज्जलजस्य विकलत्वेन न्यूनत्वम्।

दक्खिण्णेण वि एन्तो सुहअ सुहावेसि अम्ह हिअआइं ।
णिक्कइअवाणुरत्तो जाणं का णिव्वुदी ताणं ॥ ४३५ ॥
[ दाक्षिण्येनाप्यागच्छन्सुभग सुखयस्यस्माकं हृदयानि ।
निष्कैतवानुरक्तोऽसि यासां का निर्वृतिस्तासाम् ॥ ]

अत्र दाक्षिण्यागमनेनापि निर्वृतिर्भवति। निष्कैतवानुरागनिबन्धनागमेनार्थाल्लोकोत्तरेव निर्वृतिर्भवतीति प्रकृतादप्रकृतस्यापतनम्। दाक्षिण्यागमनापेक्षया चात्र सद्भावागमनस्याधिकत्वम्। एतानि सम्भवे सम्भवस्य। असम्भवे असम्भवस्य यथा—

सुभटशतनिशातखड्गधाराविहरणसव्रणपादपल्लवेव ।
अपि नयनिपुणेषु नो भरेण क्षिपति पदं किमुत प्रमादिषु श्रीः ॥४३६॥

अत्र नयनिपुणवृत्तान्तादप्रकृताप्प्रकृतस्य प्रमादशीलसोमदेववृत्तान्तस्य न्यूनस्यावगमान्नयनिपुणेषु श्रियःस्थिरत्वासम्भवे प्रमादिषु अप्यसम्भवः।

एक्को वि कालसारो ण देइ गन्तुं पदाहिणवलन्तो ।
किं उण वाहाउलिअं लोअणजुअलं पिअअमाए ॥ ४३७ ॥
[ एकोऽपि कृष्णसारो न ददाति गन्तुं प्रदक्षिणं वलन् ।
किं पुनर्बाष्पाकुलितं लोचनयुगलं प्रियतमायाः ॥ ]

अत्रैकस्य कृष्णशारस्य दक्षिणवलनाद्गमनासम्भवे द्वयोरपि लोचनयोस्तथाविधयोरर्थादसम्भव इति न्यूनादधिकस्यापतनम् । आर्थो यथा—

लुम्बीओ अङ्गणमाहवीणँ दारग्गलाउ जाआउ ।
आसासो पन्थपलोअणे वि नट्ठो गअवईणं ॥ ४३८ ॥
[ स्तवका अङ्गणमाधवीनां द्वारार्गला जाताः ।
आश्वासः पान्थप्रलोकनेऽपि नष्टो गतपतिकानाम् ॥ ]

अत्र पान्थानां प्रलोकननिवृत्तौ वार्ताप्रश्नादि दूरापास्तमित्यर्थादवगम्यते । यच्चात्र केनचिदभिहितम् । दण्डभक्षणेनापूपभक्षणावगतिः सम्भवति सहस्रे शतमितिवत् न्यूनस्याधिकेऽन्तर्भावात्तत्सिद्ध्या न्यूनस्यापि सिद्धिरिति सम्भवोऽनुमानेऽन्तर्भवतीत्यनुमानमेवालङ्कारो न तु पृथगर्थापत्तिर्नामेति तदसत् । समं न्यूनं वार्थान्तरं, तेन सम्भवाभावात् । न हि यथाधिक्ये न्यूनस्य सम्भवस्तथा न्यूनादावधिकादे. । दण्डापूपिकेति च समानन्यायतया उपलक्षणमिति समन्यूनयोरपि परिग्रह. । कस्मिन्प्रमाणे तर्हीयमन्तर्भवतीति तार्किकमन्यमात्मानं पृच्छन् वा कथं न जिह्रेषि । औचित्यानौचित्यरूपोऽयं तर्को हि प्रमाणस्योपकरणं न पृथक् प्रमाणम् । दण्डभक्षणे ह्यपूपानामपि भक्षणमुचितं न तु निश्चित । दण्डभक्षणेऽपि भिन्नदेशावस्थानादिना केनचिन्निमित्तेनापूपाभक्षणस्यापि वाहकेलिप्रदेशे रात्रौ निखातस्थाणुवत्सम्भवात् । तस्मादौचित्यादिरूपतर्कात्मिका भिन्नैवानुमानादे. प्रतीतिभेदादिहार्थापत्तिरिति स्थितम् ।

दण्डापूपनयेन वस्त्वनुमितिः सामर्थ्यतो जायते
नान्तर्भावमसौ प्रयात्यनुमितौ यत्सम्भवात्मा ततः ।

अर्थापत्तिरलङ्कृतिः पृथगियं नो लक्षणीयेत्यसत्-
तर्कोऽङ्गं यदयं बुधैरनुमितेः सम्भावनात्मोदितः ॥

इति संक्षेपः ॥ ८१ ॥

असंभाव्यहेतुफलप्रेषणं विधिः ॥ ८२ ॥

यस्मिन्सति प्रेपणं तत्तस्य निमित्तं। फलं च तस्य प्रेष्यमाणपुरुष-प्रवृत्तिः। तयोर्हेतुफलयोरसम्भाव्यत्वे यत्कस्यचित्प्रेपणं स विधिः। प्रेपण-मात्ररूपस्य विधेश्चारुताभावान्नालङ्कारता। न चायं विध्याभासः। तत्रानिष्टस्य विधानार्हत्वे विधानमिह त्वसंभावितनिमित्तत्वेऽपि नानिष्टत्वम्। असम्भा-वितनिमित्तस्य च विधानमात्रस्य पर्यवसितत्वेन विहितनिषेधाभावान्निश्च-याक्षेदः। प्रेपणव्यतिरेकेण पूर्वोदाहरणवत् प्रयत्नविफलत्वस्य सम्भवाद्वि-चित्रस्य भिन्नविपयत्वेऽस्य न तदन्तर्भावः। उदा०—

पृथ्वि स्थिरा भव भुजङ्गम धारयैनां
त्वं कूर्मराज तदिदं द्वितयं दधीथाः।
दिक्कुञ्जराः कुरुत तत्त्रितये दिधीर्षा
देवः करोति हरकार्मुकमाततज्यम् ॥ ४३९ ॥

अत्र हरकार्मुकारोपणहेतुकं पृथ्व्या देश्चलनादिकमर्थावसितमसम्भावित-मेव स्थैर्यादौ प्रेपणप्रयोजकतया विवक्षितं न तु प्रेपणफलस्य पृथ्वीस्थैर्यादे-रसम्भाव्यमानत्वम्। तस्य तैस्साधयितुं शक्यत्वात्। असम्भाव्यफलं यथा—

श्यामां श्यामलिमानमानयत भोः सान्द्रैर्मषीकूर्चकैः
मन्त्रं तन्त्रमथ प्रयुज्य हरतः श्वेतोत्पलानां द्युतिम्।
चन्द्रं चूर्णयत क्षणाच्च कणशः कृत्वा शिलापट्टके
येन द्रष्टुमहं सहे दश दिशस्त्वद्वक्त्रमुद्राङ्किताः ॥ ४४० ॥

अत्र प्रेपणफलस्य श्यामाश्यामलीकरणादौ तद्योगलक्षस्याशक्यत्वेनासम्भा-व्यमानत्वम्। यथा वा—

गज्ज महं चिअ उवरिं सव्वत्थामेण लोहहिअअस्स ।
जलहर लम्बालइअं मा रे मारेहिसि वराइं ॥ ४४१ ॥

[ गर्ज ममैवोपरि सर्वस्थाम्ना लोहहृदयस्य ।
जलधर लम्बालकिकां मा रे मारयिष्यसि वराकीम् ॥ ]

अत्रानानुविधेयवचनस्य घनस्य प्रेपणवशेन प्रवृत्त्यसम्भवाज्ञिविदगर्जने वराकीमारणनिषेधे च प्रेपणं सम्भावितफलम् । न चात्रात्मोपरिगर्जनस्यानिष्टत्वम् । तन्वीमारणनिषेधहेतुकतयार्थनीयत्वात्तत्र विध्याभासः । इह तु

गज्जसु जलअ जहिच्छं तुमंपि विप्फुरसु विज्जुले अहिअं ।
ण हु फुडइ वज्जघडिअं कढिणं अम्हाण हअहिअअं ॥४४२॥

[ गर्ज जलद यथेच्छं त्वमपि विस्फुर विद्युदधिकम् ।
न खलु स्फुटति वज्रघटितं कठिनमस्माकं हतहृदयम् ॥ ]

असभाव्यप्रेपणफलत्वेऽपि रक्षणीयान्तरानुपादानात् गर्जनादेरनिष्टत्वेन विध्याभाससंकीर्णता ।

असम्भाव्यफलो यत्नो वाचिकः प्रेषणं विना ।
विचित्राक्रमसम्भाव्यफलं तु प्रेषणं विधिः ॥ इति निर्णयः ॥८२॥

## अन्यनिषेधार्थोऽपि विधिर्नियमः ॥ ८३ ॥

इहाज्ञातज्ञापनं विधिः । स चेद्विधावेव पर्यवसितस्तदा विधि. । यदा तु कस्यचिदर्थस्यानियमेन ज्ञातस्य विधान क्रियमाणमर्थान्तरनिषेधार्थमपि सम्पद्यते तदा नियम· । यतोऽप्राप्तप्राप्तिमात्रपर्यवसितो विधि. । अप्राप्तार्थांशप्रापणरूपमन्यनिषेधार्थपर्यवसायि तु विधान नियमः । सर्वप्रकारं प्राप्तस्य विधानमर्थान्तरनिषेधमात्रतत्पर परिसंख्येति निर्णयः । अत्र ज्ञातत्वज्ञापनार्थ क्वापि प्रश्नपूर्वकमपि ज्ञापन, परिसंख्यायां तु सर्वथा ज्ञातत्वादर्थस्य प्रश्नपूर्वकत्वानुपपत्ति. । अत एव प्रश्नपूर्वा परिसंख्येति भेदो न वाच्य. । तत्र त्वन्यमते उत्तरालङ्कारो हि युक्तोऽस्मन्मते तु वक्ष्यमाणनीत्या नियम एव । अयं च निषिध्यमानस्य शब्दोपात्तत्वार्थावसेयत्वाभ्यां द्विभेद. यथा—

किं भूषणं सुदृढमत्र यशो न रत्नं
किं कार्यमार्यचरितं सुकृतं न दोषः ।
किं चक्षुरप्रतिहतं धिषणा न नेत्रं
जानाति कस्त्वदपरः सदसद्विवेकम् ।। ४४३ ।।

अत्र कीर्त्यादेस्सुदृढभूषणत्वादिकं नियमेनाज्ञातं ज्ञापितं सदन्यनिषेधाय पर्यवस्यतीति यस्यापि निषेधस्तस्यापि उपादानम् ।

किं आसेव्यं पुंसां सविधमनवद्यं द्युसरितः
किं एकान्ते ध्येयं चरणयुगलं कौस्तुभभृतः ।
किमाराध्यं पुण्यं किमभिलषणीयं च करुणा
यदासक्त्या चेतो निरवधिविमुक्त्यै प्रभवति ।। ४४४ ।।
भक्तिर्भवे न विभवे व्यसनं शास्त्रे न युवतिकामास्त्रे ।
चिन्ता यशसि न वपुषि प्रायः परिदृश्यते महताम् ।। ४४५ ।।

अत्र महतां भवादौ भक्त्यादिकं तदपि सर्वदैव भवतीत्यज्ञातं ज्ञापितम् ।

का विसमा देवगई किं दुल्लहं जं जणो गुणग्गाही ।
किं सोक्खं सुकलत्तं किं दुक्खं जं खलो लोओ ।। ४४६ ।।
[ का विषमा दैवगतिः किं दुर्लभं यज्जनो गुणग्राही ।
किं सौख्यं सुकलत्रं किं दुःखं यत्खलो लोकः ।। ]

इत्यादावन्यवैलक्षण्येन दैवगत्यादेर्वैषम्यादिकमज्ञातं ज्ञापितमित्यस्यार्थं निषेध इति नियम एव न तु पृथगुत्तरालङ्कारो वाच्यः । प्रश्नपूर्वकस्य नियमस्योत्तरान्तर्भावात् ।

वाणिअअ हत्थिदन्ता कुत्तो अम्हाण वग्घकित्ती अ ।
जाव लुलिआलअमुही घरम्मि परिसक्कई सुण्हा ।। ४४७ ।।
[वाणिजक हस्तिदन्ताः कुतोऽस्माकं व्याघ्रकृत्तयश्च ।
यावल्लुलितालकमुखी गृहे परिसंक्रामति स्नुषा ।। ]

एवमादावुत्तराख्यश्रोश्नयनरूपस्योत्तरस्य चारुताभावादनलङ्कारत्वम्। एवम्

पसिअ पिए का कुविआ सुतणु तुमं परअणम्मि को कोवो।
को हु परो नाथ तुमं कीस अपुण्णाण मे सत्ती॥ ४४८ ॥
[ प्रसीद प्रिये का कुपिता सुतनु त्वं परजने कः कोपः।
कः खलु परो नाथ त्वं किमित्यपुण्यानां मे शक्तिः॥ ]

इत्यादौ मालिकाख्यं उत्तरं वाकोवाक्यं वा विच्छित्यभावादनलङ्कार एव। अज्ञातज्ञापनावलम्बनेनोदाहृतो नियम । प्रेषणमुखेन यथा—

अत्ता एत्थ णिमज्जइ एत्थ अहं दिअसअं पलोएहि।
मा पहिअ रत्तिअन्धअ सेज्जाए मह णु मज्जिहिसि ॥४४९॥
[ श्वश्रूरत्र शेते अथवा निमज्जति अत्राहं दिवसकं प्रलोकय।
मा पथिक रात्र्यन्ध शय्यायामावयोर्मांङ्क्षीः॥ ]

अत्र वाच्यपक्षे रात्र्यन्धस्य पक्षे स्वत एव शय्यान्तनिषेधे प्राप्तेऽपि पुन र्निषेधविधिः सर्वथाऽस्मच्छयनदेशादन्यत्र शयनप्राप्त्यर्थे । मदीय एव शयने न श्वश्रूसम्बन्धिनीति व्यङ्ग्यपक्षेऽपि रागान्धतया रात्रौ विवेकाभावेन पक्षे प्राप्तस्य वक्तृशय्याशयनस्य श्वश्रूशय्यानिषेधमुखेन सर्वथा प्राप्त्यर्थं पुन- र्वचनमिति नियम एवेति सिद्धम्।

अवश्यवाच्ये नियमे प्रश्नपूर्वकमुत्तरम्।
अन्तर्भूतमतो ह्यन्यत्वक्तव्यं न तद् उत्तरम्॥
ज्ञातज्ञापनरूपा यत् परिसंख्येति तत्र न।
प्रश्नपूर्वकता युक्ता तेनात्र नियमः स्फुटः॥

इति संग्रहः ॥ ८३ ॥

## प्राप्तस्य परिसंख्या ॥ ८४ ॥

अन्यनिषेधार्थमिति विधिरिति चानुपक्तम्। इहापि पूर्ववदेव यत्र सर्वथा प्राप्तत्वादप्राप्तांशपरिपूरणस्याप्यसम्भवे विधानं क्रियमाणमर्थान्तरनिषेधमात्राय पर्यवस्यति सा परिसंख्या। अत एव नियमाद्भेदः। तथा हि पञ्च पञ्चनखा

भक्ष्या इत्यादौ परिसंख्यायामन्यपञ्चनखनिषेधपरत्वं न तु पञ्चनखभक्षणकर्तव्यपरतापि। तथात्वे हि पञ्चानामभक्षणे प्रत्यवायः स्यात्। नियमे तु व्रीहीनवहन्तीत्यादावघातस्य सर्वथा कार्यतया दलनादेर्निषेधः। न तु निषेधमात्रतात्पर्यम्। अवघाताभावे विध्यसम्पत्तेः। अत्र च निषिध्यमानस्य शाब्दत्वमार्थत्वं वेति द्वौ भेदौ। प्रश्नपूर्वकत्वेन भेदद्वयस्याज्ञातज्ञापनरूपतया सर्वथाप्राप्त्यभावान्नियमविषयतया यथोदाहृतम्।

अथ बहुचरतोऽस्य चापपाणे-
श्चकितवलन्मृगयूथवीक्षितस्य।
वनभुवि सुलभः परिश्रमोऽभू-
न्नतु हरिणस्स हृतेन्द्रचापशोभः॥ ४५०॥

अत्र मृगप्राप्त्यर्थमटवीमटतो ह्ययस्यापि सुलभत्वप्राप्तौ परिश्रमस्यैव सुलभत्वकथनेन मृगसुलभत्वस्य निषेधः। ज्ञातज्ञापनत्वम्।

विसमासु समरसीमासु जेण चाइक्करसिअहिअएण।
हत्थो पसारिओ णं णवरं करवालगहणम्मि॥ ४५१॥
[ विषमासु समरसीमासु येनं त्यागैकरसिकहृदयेन।
हस्त प्रसारितो नूनं केवलं करवालग्रहणे॥ ]

अत्र खड्गग्रहणे करप्रसारणस्य नृपतेर्ज्ञातस्य ज्ञापनं दैन्यादिसुलभत्वेन करप्रसारणनिषेधार्थम्। यथा वा—

विलङ्घयन्ति श्रुतिवर्त्म यस्यां लीलावतीनां नयनोत्पलानि।
बिभर्ति यस्यामपि वक्रिमाणमेको महाकालजटार्धचन्द्रः॥ ४५२॥

अत्र लीलावतीनयनमहाकालगतार्धचन्द्रयोः अत्युल्लंघनकुटिलताधारणयोर्ज्ञातयोरपि ज्ञानं पौराणां तदभावज्ञापनार्थम्। एतेषु ज्ञातज्ञापनेन परिसंख्याप्राप्ते प्रेषणेन यथा—

अण्णत्थ कुणुसु जोण्हां मा चन्द समुद्दवरिसओ होइ।
उज्जोइअं घरं णो दइआमुहचन्दकन्तीए॥ ४५३॥

[ अन्यतः कुरुष्व ज्योत्स्नां मा चन्द्र समुन्द्रवर्षको भव ।
उद्योतितं गृहमस्माकं दयितामुखचन्द्रकान्त्या ॥ ]

अत्र वक्तृगृहादन्यत्रकरणे स्वत एव प्रवृत्तस्य चन्द्रस्य यत्प्रेषणं तत्तद्गृहज्योत्स्नाकरणस्य निषेधार्थम् । अत्र चासंभाव्यफलत्वेन प्रेषणस्य विधिसंकीर्णतापि ।

शिथिलीकृतजीवाशा यस्मिन्कोपोल्लसद्भुवि ।
निन्युश्शिरांसि स्तब्यानि धनूंषि न नतिं नृपाः ॥ ४५४ ॥

इत्यादौ पञ्चतव्यतिरिक्तपञ्चनखभक्षणवच्छिरोनतिधनुर्नत्योर्विरुद्धत्वेन पाक्षिकत्वेन यौगपद्यासंभवेन पक्षेऽप्यज्ञातज्ञापनस्य भावान्नियम एव न तु परिसंख्येति मन्तव्यम् ।

अविरोधेन युगपत्प्राप्तयोर्विधिहेतुकः ॥
अस्यां निषेध एकस्य नियमस्त्वन्यथा स्थितः ।

इति विवेक. ॥ ८४ ॥

## प्रत्यापत्तिः प्रतिप्रसवः ॥ ८५ ॥

निवृत्तस्यार्थस्य पुनः प्राप्तिः प्रत्यापत्ति , सा प्रतिप्रसवोऽलंकारः । यथा—

विभिन्नवर्णा गरुडाग्रजेन सूर्यस्य रथ्या परितः स्फुरन्त्या ।
रत्नैः पुनर्यत्र रुचा रुचं स्वामानिन्यिरे वंशकरीरनीलैः ॥४५५॥

शि. ४. १४

अत्र निजाया रवेररुणकान्त्यन्तरितत्वेन निवृत्तायाः पुनः प्राप्तिः। यथा च—

पन्नगेश्वरफणासु तद्बलक्षुण्ण रेणुगलितापि सर्वतः ।
आर्द्रतां गजमदाम्बुभिर्गता भूमिरभ्यधिकमाप गौरवम् ॥४५६॥

अत्र निवृत्तस्य गौरवस्य मदोऽम्बुवशात्पुनः प्रवृत्तिः ।

कान्त्या विलुप्तानि विलोचनानामापाटलानामतिरोदनेन ।
सकुङ्कुमानीव पुनर्भवन्ति यस्यारिनारीकुचमण्डलानि ॥ ४५७ ॥

इत्यादावुत्प्रेक्षादि संकीर्णताऽस्य च ज्ञेया। यथा च—

जणणीएँ दुध्धधवला चन्दणधवला पुणो वि तरुणीणं।
चिन्तेन्ताण समप्पइ कालो थणएँ जेव्व जणस्स ॥ ४५८ ॥
[ जनन्या दुग्धधवलौ चन्दनधवलौ पुनरपि तरुणीनाम्।
चिन्तयत समाप्यते कालः स्तनावेव जनस्य ॥ ]

अत्रातिबाल्यदशायां प्रवृत्तस्य स्तनचिन्तनस्यार्थावसेयनिवृत्तस्य तारुण्येऽप्याविर्भावः। एकस्य च धवलस्तनचिन्तनस्य बाल्यतारुण्यरूपे नैकस्मिन् क्रमेण भावात्पर्यायसंकीर्णता। पन्नगेश्वरेत्यादावस्योदाहरिष्यमाणानुसारेण च पर्यायस्य विविक्तविषयत्वान्नान्योन्यमन्तर्भावः। यथा च—

द्वारं वेत्रिभिरावृतं बहिरपि प्रक्लिन्नगण्डैर्गजैः
अन्तः कञ्चुकिभिः स्फुरन्मणिवरैरध्यासिता भूमयः।
आक्रान्तं शयनं......त्वद्विद्विषो मन्दिरे
राजन्सैव चिरन्तनप्रणयिनी शून्येऽपि राजस्थितिः ॥४५९॥

अत्र राजमन्दिरस्य शून्योक्त्या सामर्थ्यावसायितायां वेत्रिगजादिनिवृत्तौ शून्येऽप्यभिगते कारणाभावे कार्यायाः पुनःप्रवृत्तेरुपनिबंधाद्विभावनासंकीर्णता ॥ ८५ ॥

## नानाफलप्रयुक्तः प्रयत्नस्तन्त्रम् ॥८६॥

अनेकस्य फलस्य तुल्यतया साध्यस्य यत्र प्रयत्नप्रयोज्यत्वं तत्तन्त्रम्। प्रयत्नश्चात्र व्यापारात्मकस्तेन न विचित्रालङ्कारभेदत्वेन विगणितम्। तस्य हीच्छाहेतुकस्य प्रयत्नस्य वैफल्यादिकं रूपम्। इह त्विच्छाभावेऽपि प्रयत्नातुल्यकार्यद्वयोत्पत्तिर्यथा।

यस्यासमं समरकर्म दिदृक्षमाणै-
र्दोषद्वयं फणिभिरापि चमूरजस्तः।
यत्कूणितेक्षणतया न कबन्धनृत्तं
दृष्टं श्रुतो न च महाभटसिंहनादः ॥ ४६० ॥

अत्र रजोवशेन नेत्रनिमीलनरूपस्य प्रयत्नस्य दर्शनश्रवणाभावयोर्यौगपद्येन तुल्यतया जननम्। यद्यप्यत्र नेत्रनिमीलनरूप' प्रयत्नो रजःकृतोपघातनिवृत्त्यर्थं क्रियमाणोऽर्थादर्शनाद्यभाव विधत्ते न तु तत्प्रयुक्तः तथापि तन्निष्पाद्यत्वेनोत्पाद्यमानयोरदर्शनाश्रवणयोरेकस्य प्राधान्याभावात्तुल्यतया युगपदुत्पन्नयोस्तन्त्राङ्गता भवत्येव। तेनाप्रयोजकफलनिवृत्तिरनुपङ्गादिति विशेषालङ्कारेण सह तन्त्रस्य संकरः। एवमन्यत्रापि विवेच्यम्। यथा वा—

तुह सेण्णभिण्णपाआरभरिअपरिहासमीकिदे भमति।
तिदसेन्दणअरिभाए अपरिक्खलिआ सुहं कित्ती ॥ ४६१ ॥
[ तव सैन्यभिन्नप्रकारभरितपरिखासमीकृते भ्रमति।
त्रिदशेन्द्रनगरीभागे अपरिस्खलिता सुखं कीर्तिः ॥ ]

अत्र प्राकारभेदनेन विरोधो मार्गवैषम्यं च निवारिते। यथा वा—

आणन्दणं मह लोअणाण सुहनिव्वुडी वि हिअअस्स।
अङ्गाणममअवरिसो होहिइ मह वल्लहे दिट्ठे ॥ ४६२ ॥
[ आनन्दनं मम लोचनानां सुखनिर्वृतिरपि हृदयस्य।
अङ्गानाममृतवर्षो भविष्यति मम वल्लभे दृष्टे ॥ ]

अत्र वल्लभदर्शनाद्विलोचनादिभिरविपयस्यानन्दादेर्युगपदुत्पत्तिः। यथा च—

अद्धच्छिपेच्छिअं मा करेहि साहाइअं पलोएहि।
सोवि सुदिट्ठो होहिइ तुमं पि मुद्धा कलिज्जिहिसि ॥ ४६३ ॥
णहमाणकचग्गहताडणेहि अहरावपीडणेणं अ।
रोसो रअं च रचिअं समं वि संकेज्ज कुविआए ॥ ४६४ ॥
[ अर्धाक्षिप्रेक्षितं मा कुरुष्व स्वाभाविकं प्रलोकय।
सोऽपि सुदृष्टो भविष्यति त्वमपि मुग्धा कलयिष्यसे ॥
नखमानकचग्रहताडनैरधरावपीडनेन च।
रोषो रतं च रचितं समं शङ्केत कुपितया ॥ ]

अनयोर्ऋजुविलोकननखक्षतादिप्रयत्नद्वयस्य प्रियसम्यग्दर्शनमुग्धतावधारणे रोषरते चेति युगपत्तुल्यतया भवत इति नानाफलत्वम्। द्वितीयस्मिन् रतरोषयोरेककारणजन्यत्वं चिन्त्यमपि। अत्र च यौगपद्येन फलद्वयस्य तुल्यतयोत्पत्तेः समुच्चयाद्भेदः। न हि तत्र समुच्चीयमानयोरेकप्रयत्नकार्यत्वं प्रयोजकम्। क्रियाणां व्यापाररूपप्रयत्नजन्यत्वाभावात्।

विदलितसकलारिकुलं तव बलमिदमभवदाशु विमलं च।
प्रखलमुखानि नराधिप मलिनानि च तानि जातानि ॥ ४६५ ॥

इत्यादौ कार्यकारणभूतयोर्गुणयोस्समुच्चयदर्शनाच्चात्र हि बलविमलत्वं खलमुखमलिनत्वे कारणम्। क्वचित्तु समुच्चयेन सङ्करे न दोषः ॥ ८६ ॥

प्रसङ्गादन्यार्थः प्रसङ्गः ॥ ८७ ॥

प्रयत्न इत्यनुपक्रमम्। यत्र प्राधान्यात्केनचित्फलेन कस्यचित्प्रयुक्तस्य प्रयत्नस्यार्थान्तरकार्यकारिता प्रसङ्गाद्भवति स प्रसङ्गः। न चायं तृतीयो विशेषः। तथा हि इह कुत्रचित्तुल्यतया द्वयोः फलयोः प्रयोजकत्वम्। क्वापि प्रयुक्तिसामर्थ्येऽपि परप्रयुक्तोपजीवकत्वमेव। तत्राद्यस्तन्त्रम्। द्वितीयः प्रसङ्गविषयः। तृतीयस्त्वप्रयोजकभूमिस्सन्विशेषालङ्कारे तृतीयभेदाङ्गम्। एवं चानुनिष्पन्नतया यत्र फलान्तरमुत्पद्यते तत्र विशेषः। यत्र तु चिकीर्षितमपि प्रसङ्गात् संपद्यते तत्र प्रसङ्गः।

फलान्तरस्य निष्पत्तिश्चिकीर्षाविरहेऽपि या।
स विशेषश्चिकीर्षायां प्रसङ्गस्तु ततः पृथक् ॥ इति

अङ्गेषु सान्द्रहरिचन्दनपङ्कचर्चा
भार्णालहारवलयादि च पान्थवध्वाः।
योऽभूद्दिवा पतिवियोगविषाददम्भो
ज्योत्स्नाभिसारपरिकर्म स नक्तमासीत् ॥ ४६६ ॥

अत्र वियोगदुःखनाटनाय दिवा प्रयुक्तस्य चन्दनचर्चादेस्सर्वमभिसारिक कर्मत्वं प्रसङ्गाज्जातम्।

दिवसेऽर्चनप्रयुक्तो दीपो निशि दर्शयेत् प्रसङ्गेन ।
अर्थान्यथा तथात्र हि चन्दनचर्चाफलान्तरकृद् ॥

इति परिकराह्वा । अत्र च कालभेदेन प्रसङ्गः । तुल्यकालत्वे यथा—

एकत्र कार्ये गुणिनो नियुक्ता
कार्यान्तरं द्रागपि साधयन्ति ।
स्त्रीणां हि कण्ठाभरणानि हाराः
पयोधरानप्यभिभूषयन्ति ॥ ४६७ ॥

अत्र स्तनयोः स्वस्य भूषार्थमलंकरणप्रयुक्तिसामर्थ्येऽपि कण्ठशोभाप्रयुक्तेन हारेणैव तयोरपि तत्सिद्धिरिति यौगपद्येन तुल्यलक्ष्यकार्यद्वयसम्पत्त्यभिधानात्प्रसङ्गः ।

तत्ताण्डवश्रवणतालमरुत्तरङ्गैः-
स्संमार्जितां मदपयःप्रकरेण लिप्ताम् ।
नम्रीभवन्निभमुखो यदिह स्वकुम्भ-
सिन्दूरबिन्दुभिरुपस्कुरुते धरित्रीम् ॥ ४६८ ॥

तथा—

प्रत्यग्रचूताङ्कुरकर्णपूरैः
शोभैव काप्यायतलोचनानाम् ।
भोगस्तदा घ्राणवशात्ततोऽभूत्
अपाङ्गलीलावसतेः स्मरस्य ॥ ४६९ ॥

अत्र नमनावतंसनयोश्चिकीर्षितयोर्विधानेनाचिकीर्षितस्य धरित्र्युपस्कारस्मरोपभोगात्मकस्य फलान्तरस्य निष्पत्तिप्रतिपादिका स्फुटैव वाचोयुक्तिरिति विशेषालंकार एव ॥ ८७ ॥

विरुद्धयोस्तुल्यत्वे पाक्षिकत्वं विकल्पः ॥ ८८ ॥

यत्र द्वयोरर्थयोर्विरुद्ध(त्वा)त् समुच्चयाभावेन तुल्यबलवत्त्वाच्च एकस्य बाधासंभवादनियतैकतरावलम्बनेन पाक्षिकत्वं स विकल्पः । उदाहरणम्—

पिअसहि दोवि उवाआ मअणाणलताविअस्स हिअअस्स।
दइंअगसंगमो वा मच्चू वा कङ्खिआसण्णो ॥ ४७० ॥
[ प्रियसखि द्वावुपायौ मदनानलतापितस्य हृदयस्य।
दयिताङ्गसङ्गमो वा मृत्युर्वा काङ्क्षितासन्नः ॥ ]

अत्र मदनसन्तापस्योभयथा निवृत्तिर्मृत्युप्रियसङ्गमयोस्तुल्यत्वेन तुल्यबलयोर्विरुद्धत्वाद्विकल्पः। न तु संभवदुपायद्वयकथनान्मरणादेराशंसनीयतयानुपादानाद्विकल्पाभासः। यथा वा—

निन्दन्तु नीतिनिपुणा अथवा स्तुवन्तु
लक्ष्मीः परापततु गच्छतु वा यथेष्टम्।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रचलयन्ति पदं न धीराः ॥ ४७१ ॥

अत्र निन्दादेः स्तुत्यादेर्वा न धैर्यनिवृत्तिरिति निन्दायाःस्तुतेर्वा पाक्षिकोऽभ्युपगमः कृतः। न चात्र निन्दास्तुत्योर्यौगपद्यमिति वाच्यम्। न हि एकस्मिन्तुल्ये कर्मणि प्रवृत्तस्य नीतिनिपुणैर्निन्दा स्तुतिश्च क्रियते। किन्तु कदाचिदभिमानाद्यनुसारेण प्रवर्तमानस्य निन्दान्यदा स्तुतिः। अत एव न समुच्चये वाशब्दः विरुद्धत्वे यौगपद्याभावात्। नापि निन्दालक्ष्मीगमनादेरनिष्टत्वेन स्तुत्यादावेव तात्पर्यविवक्षया विकल्पाभासः। न्याय्ये वर्त्मनि धैर्यनिवृत्तिनिमित्तत्वेन तुल्यतया विवक्षितत्वात्। इह तु

शम्भोर्मूर्ध्नि वसन्स्पृशन्सपदि वा पादाः करैः क्ष्माभृतां
तृप्तिं सर्वसुधान्धसां विरचयन्वृद्ध्यै व्रजन्वाम्बुधिम्।
आशास्यस्सततं चकोरनिवहैर्द्रष्टुर्यो रथाङ्गैश्च वा
संस्मृत्यापि सचेतसां वितनुते प्रीतिं कलानां निधिः ॥ ४७२ ॥

इति न विकल्पः। शम्भुमूर्धवासक्ष्माभृत्पादस्पर्शादेर्यौगपद्येन वस्तुतो भावात्। वाशब्दश्च द्वयोर्विरुद्धत्वाख्यापनार्थः। तेनात्र वैधर्म्यालङ्कारसंकीर्णो विरोधः।

विप्फुरिअवअणसोहं विलासपीअंवरं सवणमालं ।
पणमह महुमहणं वा अहरं वा कुवलअच्छीणं ॥ ४७२ ॥
[ विस्फुरितरत्नशोभं ( विस्फुरितरदनशोभं वा )
विलासपीताम्बरं ( विलासप्रीतं वरं वा )
सवनमालं ( सव्रणमालं वा ) ।
प्रणमत मधुमथनं वाऽधरं वा कुवलयाक्षीणाम् ॥ ]

अत्र भोगमोक्षयोरुद्धुरकन्धरत्वेनावश्याभ्यर्थनीयत्वेन परस्परविरुद्धार्थत्वात् एकतरावलम्बनं उपदिष्टम् । अत्र च कार्यविषयो वास्तवो विकल्पो विच्छित्तिविशेषेणोपनिबद्ध इत्यलङ्कारः ।

अग्रे गीतं सरसकवयः पार्श्वयोः दाक्षिणात्याः
पश्चाल्लीलावलयरणितं चामरग्राहिणीनाम् ।
अस्त्येवं चेत्कुरु भवरसास्वादने लम्पटत्वं
नो चेच्चेतः प्रविश सहसा निर्विकल्पे समाधौ ॥ ४७४ ॥

इत्यत्र भवरसास्वादनस्य प्राधान्येन निर्देशात्तदभावे समाध्यवलम्बनोपनिबन्धाच्च द्वयोस्तुल्यबलत्वप्रतिपादनाभावात् अश्लिष्टमुदाहरणम् ॥ ८८ ॥

धर्मयौगपद्यमन्यस्यापि तत्करत्वं च समुच्चयः ॥ ८९ ॥

गुणक्रियाणामभावादेर्व्यस्तसमस्तत्वेन यौगपद्यं तथैकेन यत्क्रिप्यतेऽन्यस्यापि तत्कारित्वं च समुच्चय. । क्रमेणोदाहरणम् ।

दइअम्मि दिट्ठमेत्ते विमलं रत्तं च मानसं होइ ।
पाअपडिए वि तस्सिं अच्छरिअं वज्जकढिणासि ॥ ४७५ ॥
[ दयिते दृष्टमात्रे विमलं रक्तं च मानसं भवति ।
पादपतितेऽपि तस्मिन्नाश्चर्यं वज्रकठिनासि ॥ ]

अत्र वल्लभदर्शनात्कारणादुत्पन्नयोर्विमलत्वरक्तत्वयोर्गुणयोः श्लेपाध्यवसायानुप्राणितस्समुच्चयः ।

किञ्चित्कोपतरङ्गितभ्रुवि भवत्याविर्भवद्भीतिधी—
र्यद्राजन्विदधात्ययं त्वदहितव्रातस्तदाकर्ण्यताम्।
दूरं गच्छति नाधिगच्छति हितं संमोहमागच्छति
त्राणं वाञ्छति मर्तुमिच्छति निजोपायं परिपृच्छति ॥ ४७६ ॥

अत्र गमनादीनां क्रियाणां यौगपद्यम् क्रियाणां च क्वचिदव्यवधानेन क्रमभावित्वमपि यौगपद्यम्। न तु तुल्यकालत्वेनैव दूरगमनमोहवाञ्छादीनां तुल्यकालत्वाभावात्कायिक्या अपि शयनादिकाया भ्रमणागमनस्थानादिना न सहभाव इति शेते शुष्यतीत्यादावपि नैरन्तर्यमेव यौगपद्यम्।

येषां वल्लभया सह क्षणमिव क्षिप्रं क्षपा क्षीयते
तेषां शीतकरः शशी विरहिणां तूल्केव सन्तापकृत्।
अस्माकं तु न वल्लभा न विरहस्तेनोभयभ्रंशिना-
मिन्दू राजतु दर्पणाकृतिरसौ नोष्णो न वा शीतलः ॥ ४७७ ॥

अत्र शीतलत्वोष्णत्वयोरभावः साहित्येनोपनिबद्धः।

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ ४७८ ॥
कु. १. २८

अत्र पूतत्वविभूषितत्वयोर्गुणादिरूपत्वाभावेन धर्ममात्रयोर्यौगपद्यम्। एवमादौ च धर्ममात्रादेरेकप्रयत्नजन्यत्वाभावात्तन्त्राढ्स्य विविक्तविषयत्वम्। अत्र सन्निहितया पार्वत्या पूतत्वजननं न तु पार्वतीप्रयत्नेन।

दैवादहमत्र तया चपलायतनेत्रया वियुक्तश्च।
अविरलविलोलजलदः कालः समुपागतश्चायम् ॥ ४७९ ॥

अत्र विभाव्यस्य वियोगस्यागमनक्रियया सहभाव। अत्र कामुकजलधरौ भिन्नावाश्रयौ पूर्वत्रैकविषयत्वम्।

बहुवल्लहस्स जा होइ वल्लहा कह वि पञ्चदिअहाइं।
सा किं छट्ठं मग्गइ कत्तो मिट्ठं अ बहुअं अ ॥ ४८० ॥

[ बहुवल्लभस्य या भवति वल्लभा कथमपि पञ्च दिवसान् ।
सा किं षष्ठं मृगयते कुतो मिष्टं च बहुकं च ॥ ]

अत्र मिष्टत्वस्य गुणस्य बहुत्वाख्यगुणाभावेन सह यौगपद्यम् । द्वितीयो यथा—

दूरादागतवानिति द्विज इति क्लेशीति विद्वानिति
क्षीणोपाय इति त्वदाश्रित इति स्वामी कुटुम्बीति च ।
भूभर्तुर्गुणिबान्धवस्य भवतः कल्पद्रुमस्यार्थिनां
भर्तव्योऽहमिति प्रसारय दृशौ किं वापरैः फूत्कृतैः ॥ ४८१ ॥

अत्रैकैकस्य दूरगमनादेः प्रसादकारणत्वे परिपूर्णेऽन्यस्यापि स्पर्धया एककार्यकारित्वम् । न चास्य सद्योगासद्योगसदसद्योगैर्भेदो गणनीयः । आद्ययोः समसंकीर्णत्वादुत्तरस्य विषमगर्भत्वादन्यथान्यालङ्कारसंकीर्णतया भेदगणनाप्रसंगात् ॥ ८९ ॥

## विनिमयः परिवृत्तिः ॥ ९० ॥

अन्यत्र दानपूर्वमेवादानं विनिमयः । इह तु कश्चित्त्यागपूर्वकमपि कश्चित्तु कृते प्रतिकृतिरिति उभयरूपो विनिमयः परिवृत्तिः । त्यागपूर्वकत्वे समेन समस्याधिकेन न्यूनस्य न्यूनेन वाधिकस्य स्वीकारे त्रयो भेदाः । कृतप्रतिकृतौ तु दोषाप्तौ दोषस्य गुणाप्तौ गुणस्य कृतिरिति द्विभेदत्वम् । गुणकरणे दोषस्य दोषविधाने वा गुणस्यासादनमिति भेदद्वयं प्रथमद्वितीयविषमालङ्कारभेदविषयम् ।

दोषे च दोषस्य गुणे च तस्य कृते कृतिः स्यात्परिवृत्तिरेव ।
गुणे तु दोषस्य विपर्यये वा यद्गोचरोऽसौ विषमस्स भिन्नः ॥

इति संक्षेपः ।

दोषगुणयोरपि प्रत्येकं समन्यूनाधिकत्वेन त्रिभेदत्वेन त्रिभेदैव परिवृत्तिः । क्रमेण यथा—

यत्रादत्ते निशि मरुत्सौधेन्दुमणिशीकरैः ।
घर्मोदबिन्दून्बालानां गण्डयोश्चन्द्रकान्तयोः ॥ ४८२ ॥

अत्र सौधेन्दुमणिशीकरैर्घर्मोदबिन्दूनां समानां स्वीकारः ।

बहुविविहकणअरअणप्पहाणदाणेहिं तुज्झ सव्वेहि ।
चज्जा अहिलस्सइ णरवरेहि पहुचलणधूली सा ॥ ४८३ ॥
[ बहुविविधकनकरत्नप्रधानदानैस्तव सर्वैः ।
त्याज्या अभिलष्यते नरवरैः प्रभुचरणधूलिः सा ॥ ]

अत्र बहुविधस्य कनकादेरधिकस्य दानेन तुच्छायाः चरणधूलेरादानम् ।

तस्य हि प्रवयसो जटायुषः स्वर्गिणः किमिव शोच्यते बुधैः ।
येन जर्जरकलेवरव्ययात्क्रीतमिन्दुकिरणोज्ज्वलं यशः ॥४८४॥

अत्र जर्जरकलेवरव्ययादधिकस्य गुणस्य यशसः स्वीकार. ।

जह जह मअस्स हरणं कुणइ अली मामि वारणेन्दस्स ।
एतस्स सोवि तह तह कण्णाघाअं समप्पेइ ॥ ४८५ ॥
[ यथा यथा मदस्य हरणं करोत्यलिर्मातर्वारणेन्द्रस्य ।
एतस्य सोऽपि तथा तथा कर्णाघातं समर्पयति ॥ ]

अत्र मदहारणेनापकारिणो भ्रमरस्य गजेन्द्रेण कर्णाघातैः प्रत्यपकारः कृतः ।

यथा च ।

पद्मोद्भवो विहितपद्मकुलावसानं
वैराज्यमुत्थिततरं रजनीभुजङ्गम् ।
आदाय वक्त्रघटनेन कुरङ्गदृष्टे-
र्लज्जां ममार्ज निजगोत्रपराभवोत्थाम् ॥ ४८६ ॥

अत्र कुरङ्गाक्षीवदननिर्माणेन पद्मावसानकारिणश्चन्द्रमसः पद्मभवेन प्रत्यपकृतम् । अनयोश्च समेन समस्य करणमधिकेनोनस्योनेन वाधिकस्येति दोषगुणयोः प्रत्येकं भेदद्वयं स्वयमेवाभ्यूह्यम् । इयं च कृते प्रतिकृतिः क्वचिद्दोषविषये

प्रत्यपकार एव पर्यवस्यति यथोदाहृतम्। क्वचित्तु प्रत्यपकारो निजापकारनिराकरणपर्यवसाय्यपि भवति।

सन्तप्ता शशिरश्मिभिः प्रतिनिशं राहूदयं ध्यायति
प्रालेये वहति स्पृहां कमलिनीकान्तिक्षतिप्राप्तये।
मेघाच्छादनमिच्छति स्फुटलसत्ताराकुले चाम्बरे
पान्थस्त्री विरहोदयादुपवने दावाग्निमाकांक्षति ॥ ४८७ ॥

अत्र न केवलं शशिप्रभृतीनां प्रत्यपकारार्थं राहूदयाद्याकांक्षणं यावदात्मनोऽपि सन्तापादिनिवृत्त्यर्थम्। अस्याश्च कृतप्रतिकृते एकस्यैव धर्मस्यान्योन्यनिबन्धनतालक्षणादन्योन्याद्वस्त्वंतरकरणरूपतयाभिन्न एव विषयः। यद्यपि च परिवृत्तेः कस्यचित्त्यागादन्यस्वीकारणे क्रमेणैकत्रानेकस्य वा पर्यायच्छायालिङ्गितत्वं तथापि त्यागस्वीकाररूपस्य विच्छित्त्यन्तरस्य भावात्पृथगलंकारत्वं तथा च तत्र विनिमयाभावेनैवैकत्र वानेकसंभवो दर्शयिष्यते ॥९०॥

क्रमेणैकमनेकत्रान्यथा वा पर्यायः ॥ ९१ ॥

क्रमेणैकमाधेयमनेकत्रानेकं वैकत्र यद्भवति स पर्यायः। इह क्रमग्रहणाद्द्वितीयविशेषसमुच्चययोर्यद्यौगपद्यं प्रतीयते तस्माद्विविक्तविषयत्वं तेन युगपदेकमनेकत्र यद्भवति स द्वितीयो विशेषः। तथैवैकत्रानेकश्चेत्स द्वितीयः समुच्चयः। तस्यैवार्थस्य निवृत्तस्य पुनरागमनं प्रसवः। अर्थान्तरस्य तु पर्यायः। प्रत्यादेशे तु स्थितस्यान्यथा संपत्तिर्न क्रमेण नैकत्राप्यन्यस्य स्थितिरिति भूमिकाभेदः। अस्य चानेकाधाराधेयरूपतया द्विभेदस्याधाराणां आधेयानां परस्पर वैलक्ष्ण्यमवैलक्षण्यं वेति द्वैधे चत्वारो भेदाः। क्रमेण यथा।

तीअ मुहाहि तुह मुहँ तुज्झ मुहाओ अ मज्झ चलणम्मि।
हत्थाहत्थीअ गओ अइदुक्करआरओ तिलओ॥ ४८८ ॥
[ तस्या मुखात्तव मुखं तव मुखादप्यस्माकं चरणयोः।
हस्ताद्धस्तमुपगतोऽतिदुष्करकारकस्तिलकः॥ ]

अत्रैकस्य तिलकस्य क्रमेण सदृशानेकाधारस्थितिः। यथा वा।—

दीवाओ अरुणं सिअं सरुहं चन्दाओ...
... ... पंकअवणं नक्खत्तलक्खादवि।
सामाए दिअहं चकोरविसराच्चक्काणि चक्काणअं
लच्छी पेच्छसु णाह जाइ पढमं पत्ते पभाए इओ ॥ ४८९ ॥
मोत्तूण तस्स रअणाअरस्स उस्संगमहह हरिणङ्क।
सुण्णम्मि गअणमग्गे जीरइ णवरं परिभमन्तो ॥ ४९० ॥
[ दीपादरुणं सितं सरोरुहं चन्द्रात् ... ...
नीलोत्पलादक्षीणि तरुणीनां पङ्कजवनं नक्षत्रलक्षादपि।
श्यामाया दिवसं चकोरविसराच्चक्राणि चक्राणाम्
लक्ष्मीः प्रेक्षस्व नाथ याति प्रथमं प्राप्ते प्रभाते इतः॥
मुक्त्वा तस्य रत्नाकरस्योत्सङ्गमहह हरिणाङ्क।
शून्ये गगनमार्गे जीर्यसि नवरं परिभ्रमन्॥ ]

अत्र रत्नाकरोत्संगाद्विलक्षणे शून्ये गगनमार्गे स्थितिरिति क्रमवतोराधारयोर्वैलक्षण्यम्।

प्रातश्चन्द्रमरीचिसुन्दररुचो बालप्रवालप्रभा
मध्याह्ने दिवसावसानसमये सान्द्रेन्द्रनीलद्रुहः।
रात्रौ रुद्रदरिद्रिताङ्गमदनाङ्गारानुकाराश्चिरं
दन्ताः खण्डितकान्तकुन्तलवधूबिम्बाधराः सन्तु वः ॥ ४९१ ॥

अत्रैकस्मिन्दन्तरूपे आधारे धवलत्वादीनामुत्कृष्टानामेव क्रमेण स्थितिः।

किमित्यपास्याभरणानि यौवने धृतं त्वया वार्द्धकशोभि वल्कलम्।
वद प्रदोषे स्फुटचन्द्रतारके विभावरी यद्यरुणाय कल्पते ॥४९२॥
कु. ५. ४४

अत्राभरणनिवृत्तौ विलक्षणस्य वल्कलस्याधेयस्य धारणम्। न चात्र परिवृत्तिरिति वाच्यम्। कार्यकारणभावाविवक्षणात्। तथा हि

यदैव दानादिनिमित्तके चिद्वस्त्वन्तरस्वीकरणे विवक्षा ।
तदैव युक्ता परिवृत्तिरत्र भूपावियोगस्य तु हेतुता न ॥
अन्यस्य हेत्वन्तरताप्रवृत्तिः पदाय भूस्त्यागनिमित्तकस्तु ।
इच्छावशादर्थविशेषलाभस्तस्माद् विभिन्ना परिवृत्तिभूमिः ॥

इति । अत एव च कार्यकारणभावाविवक्षया विलक्षणाधेयागमनेन विरूपकार्यरूपं विषमम् । अविलक्षणप्राप्तावत्रापि समम् । यौगपद्याभावाच्च विलक्षणानामाधाराधेयानां विरूपसंघटनारूपो विषमस्तद्विपरीतो वा सम इति विषयविवेकः ॥ ९१ ॥

आरोहावरोहादिः क्रमः ॥ ९२ ॥

क्रमेण इति अनुषज्यते । कस्यचिदर्थस्याधिकस्थानासादनमारोहः । विपर्ययोऽवरोहः । आरोहावरोहादिः क्रमेणोपनिबध्यते स क्रमः । यथा—

नन्वाश्रयस्थितिरियं तव कालकूट
केनोत्तरोत्तरविशिष्टपदोपदिष्टा ।
प्रागर्णवस्य हृदये वृषलक्ष्मणोऽथ
कण्ठेऽधुना वससि वाचि पुनः खलानाम् ॥ ४९३ ॥

अत्राब्धिहृदयादेरुत्तरोत्तराधिकस्य पदस्य कालकूटस्यासादनम् । यद्यपि चात्रैकं कालकूटमनेकस्मिन्भवतीति पर्यायस्तथाप्युत्तरोत्तराधिकस्यासादनलक्षणस्यारोहस्यापि केनोत्तरोत्तरविशिष्टपदोपादिष्टेति साक्षाद्वाक्यार्थीभूतस्य स्थितिः ।

भ्रमति हृदयावर्ते तावत्स्खलत्यथ कन्धरा-
कुहरसरणौ जिह्वासूचीमुखे ननु वेपते ।
अधरपुटयोरास्ते कष्टं चिराय कवाटिता
वचनमपरादित्य ब्रूतां कथं मम भारती ॥ ४९४ ॥

अत्र यदा पूर्वस्मादाधारान्निवृत्त्याधारान्तरसादनेनारोहादिक्रमस्तदा पर्याये संकीर्णता, यत्र त्वनिवृत्तस्यैवाधारान्तरसादनं तत्र शुद्धः क्रमः । तेन

यत्कान्ताकेशसंस्कारधूपधूमस्सुधासितं।
श्यामीकरोति प्रथमं सौधं सितकरं ततः॥ ४९५॥

इत्यत्र प्रबन्धेनोद्गच्छतो धूपधूमस्य सौधादनिवृत्तस्यैव सितकरासादनमिति क्रम एव न च पर्यायच्छायापि। अवरोहो यथा

शिरश्शार्वं स्वर्गात्पशुपतिशिरस्तः क्षितिभृतं
महीध्रादुत्तुंगादवनिमवनेश्चापि जलधिम्।
अधोऽधो गंगावद्भयमुपगता नूनमधुना
विवेकभ्रष्टानां भवति विनिपातः शतमुखः॥ ४९६॥

अत्र गङ्गादेरुत्तरोत्तरावरस्थानासादनम्। यथा च

पासे पुरओ पेरन्तअम्मि दारग्गए पईहारे।
कमसो गमिअं सेवअमुवेक्खई हन्त खलसामी॥ ४९७॥

[ पार्श्वे पुरतः पर्यन्ते द्वाराग्रे प्रतीहारे।
क्रमशो गमितं सेवकमुपेक्षते हन्त खलस्वामी॥ ]

अत्र सेवकजनस्य यथायथमपकृष्टस्थानासादनेनावरोहो न तु पूर्ववदधोदेशगमनेन आदिशब्दादारोहावरोहव्यतिरिक्तविषयः क्रमो यथा—

प्रथमं पीयते दृष्ट्या ततो नासिकया सुरा।
अनन्तरं रसनया यत्सौधेषु मृगीदृशाम्॥ ४९८॥

अत्र नासिकादिना पानसमये दृष्ट्यादिना पानस्यानिवृत्तेः क्रम एव न पर्यायः।

प्राग्भस्मभिः परपुरां ततस्सुभुजकीर्तिभिः।
जितोऽथोदयराजेन स्वकान्तावदनैः शशी॥ ४९९॥

अत्र कान्तावदनजयवेलायां भस्मजयादेरनिवृत्तेः क्रम एव। यथा वा

चयस्त्विषामित्यवधारितं पुरस्ततः शरीरीति विभाविताकृतिम्।
विभुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः॥५००॥
शि. १-३.

अत्रैकस्यैव क्रमेण तत्तद्धर्माभिव्यक्तेर्व्यक्तः क्रमः । एवं क्रमेणाव्यक्तादेरपि स्थित्या तत्र तत्रानेकावान्तरभेदभिन्नः स्वयमेवायं क्रमोऽवधारणीयः ।

यदैकस्मान्निर्वृत्तोऽर्थे आधारान्तरमाश्रयेत् ।
स पर्यायो निवृत्तौ तु क्रमो यो वहुधा स्थितः ॥

इति सग्रह । यस्तु यथासंख्यापरपर्यायः क्रमोऽन्यैर्लक्षित उदाहृतश्च यथा

चूर्णेन नागरदलैः क्रमुकैश्च मन्ये
श्रीलासरा(लासिका ?)वदनचुम्बनविभ्रमेण ।
वह्निप्रवेशवनवासनिशातशस्त्र-
च्छेदात्मकस्य तपसः फलमद्य लब्धम् ॥ ५०१ ॥

यथा वा—

स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् ।
विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥५०२॥

अनयोर्वह्निप्रवेशादीनामद्भुतरूपत्वादीना चाभिहितानामनुनिर्दिष्टश्चूर्णादिभिर्नवमनोभवादिभिश्च क्रमेण सम्बन्धाद्यथासंख्यमिति व्याख्या तच्च तस्य चारुत्वविरहेण विच्छित्तिविशेषाभावान्नालंकारता । तथा हि —

येनोद्देशः क्रमेणादावपरेण पुनर्यदि ।
क्रियते प्रतिनिर्देशो दोषः प्रक्रमभङ्गतः ॥
अथ दोषनिरासार्थं क्रमस्तद्वत्प्रवर्तते ।
यथासंख्यमलंकारो न स्याद्दोषनिवृत्तितः ॥
तस्याश्चालंकृतित्वे स्यादेकैकस्य पदस्य सा ।
पौनरुक्त्यादिविरहात्तेन नेदमलंकृतिः ॥
एकैकस्य विशेषस्य सन्निधौ यद्विशेषणम् ।
यथायोगाभिधो वाच्यस्सोलंकारस्ततः पृथक् ॥
वैचित्र्यविरहान्नैवमिष्यते चेत्समं द्वयोः ।
क्रमेण युगपद्वापि न हि बुद्धिर्विशिष्यते ॥

प्रत्युत विशेष्यपदनिकट एव विशेषणपदोपादानेन नैराकांक्षेण प्रतिपत्तेरस्त्येव विशेषः। यथासंख्ये तु विशेष्याणां विशेषणानां च पृथक्पृथगुपादानं व्यवहितसमन्वयेन साकांक्षत्वादिति। किञ्चायं यथासंख्याख्योऽलंकारः किमर्थस्य शब्दस्य वा। न तावदर्थस्य कालकूटोत्तरासादनादिवदर्थस्य क्रमासंभवात्। न द्वितीयोऽनुप्रासादिवच्छब्दस्य चारुताप्रतीतेः। तन्नाभिधेयक्रमो येनालंकारः स्यात्। किन्तु क्रमेणाभिधानम्। न चाभिधानालंकारः कश्चिदस्ति तेन—

रोहन्मूलाभिगौरैरुरगपतिफणैरत्र पातालकुक्षौ
प्रोद्यद्बालांकुरश्रीर्दिशि दिशि दशनैरेभिराशागजानाम्।
अस्मिन्नाकाशदेशे विकसितकुसुमा राशिभिस्तारकाणां
नाथ त्वत्कीर्तिवल्ली फलति फलमिदं बिम्बमिन्दोस्सुधार्द्रम् ॥५०३॥

नाथ त्वत्कीर्तिवल्ली इत्यादौ मूलादीनामभिधानस्य क्रमेणारोहणाभिधेयस्येति न क्रमालंकारः शक्यः ॥ ९२ ॥

## रूपधर्माभ्यामाधिक्यं वर्धमानकम् ॥ ९३ ॥

क्रमेणेत्यनुपक्तमुत्तरत्र च। एकस्य वस्तुनो बहूनां वा स्वरूपेण धर्मेण चोपचयः क्रमेण निबध्यते तद्वर्धमानकम्। क्रमेण यथा—

किं च्छत्रं किं नु रत्नं तिलकमथ तथा कुण्डलं कौस्तुभो वा
चक्रं वा वारिजं वेत्यमरयुवतिभिर्यद्बलिद्वेषिदेहे।
ऊर्ध्वं मौलौ ललाटे श्रवसि हृदि करे नाभिदेशे च दृष्टं
पायात्तद्वोऽर्कबिम्बं स च दनुजरिपुर्वर्धमानः क्रमेण ॥ ५०४ ॥

अत्र दानवारिवपुपः क्रमेणोत्तरोत्तरस्यावस्थाविशेषस्य स्वरूपेणाधिक्यम्। यद्यपि चात्र दनुजरिपोरर्कबिम्बस्यारोहावरोहप्रतीतिः तथापि न क्रमः स्वरूपाधिक्यस्य संभवात्। वर्धमानकादिषु च विच्छित्तेर्विशिष्टक्रमसंभवादुत्सर्गरूपं क्रमालंकारं प्रति बाधकत्वेनापवादकत्वम्।

अतसीकुसुमप्रभं मुखे तदनु त्वत्कचमेचकद्युति ।
अथ बालतमालमांसलं प्रसृतं सम्प्रति सर्वतस्तमः ॥५०५॥

अत्र तमसः क्रमेण निविडताख्यधर्मोपचयो निबद्धः ।

अत्युच्चास्तरवस्ततोऽपि गिरयः स्वर्वासिशैलस्तत-
स्तस्माद्विष्णुपदं ततः किमपरं स्यादन्यदत्युन्नतम् ।
तस्मात्सर्वत एव साधुहृदयान्युत्तुङ्गभङ्गीनि तत्
कस्याप्युन्नतये तवार्थिपदवीं चिन्तामणे तन्वते ॥ ५०६ ॥

अत्र बहूनां स्वरूपेण क्रमोपचय. ।

कुक्षेः कोटर एव कैटभरिपुर्धत्ते त्रिलोकीमिमा-
मप्युद्व्यूढभरो बिभर्ति तमपि प्रीतो भुजङ्गेश्वरः ।
श्रीकण्ठस्य स कण्ठसूत्रमभवद्देव त्वया तं हृदा
विश्राणेन परेषु पौरुषकथा श्रीकर्ण निर्नाशिता ॥ ५०७ ॥

अत्र कटभरिपुप्रभृतीनां पौरुषाख्यस्य धर्मस्य क्रमेणोपचयः । यथा च

राज्ये सारं वसुधा वसुन्धरायां पुरं पुरे सौधम् ।
सौधे तल्पं तल्पे वराङ्गनाऽनङ्गसर्वस्वम् ॥ ५०८ ॥

अत्र वसुधादीनामुत्तरोत्तरसारत्वाख्यस्य धर्मस्याधिक्यमिति धर्मोपचय-सम्भवादन्यैरुत्तरोत्तरमुत्कर्षः सार इति लक्षितस्य सारालंकारस्यास्मिन्नेवान्तर्भावान्न पृथगुपादानं कृतम् ।

अस्मिंश्च वर्धमाने सारोऽन्तर्भावमेति न पुनरिदम् ।
अन्तर्भूतं सारे परिमितविषये महाविषयम् ॥इति परिकरः॥९३॥

## विपर्ययोऽवरोहः ॥ ९४ ॥

रूपधर्माभ्यामित्येव । रूपेण धर्मेण उत्तरस्यैकस्य बहूनां वापचयो वर्धमानकविपरीतोऽवरोहः । क्रमेण यथा—

आदावम्बुनिधिस्ततश्च सरसी तस्मात्सरः पल्वलं
पश्चात्पुष्करिणी ततोऽथ विमलं कुण्डं ततो वापिका।
तस्माद्गर्तमनन्तरं च चुलकस्संपद्यमानः क्षणाद्
दृष्टो येन महार्णवः कथमसौ कुम्भोद्भवः कथ्यताम् ॥ ५०९ ॥

अत्रैकस्य महार्णवस्य क्रमशः स्वरूपेणापचयः। बहूनां यथा—

तपणाहि ससी ससिणो जलणो जलणाहि दीपओ लहुओ।
तत्तो वि तुमं खज्जोअ तह वि रे हन्त विप्फुरसि ॥ ५१० ॥
[ तपनाच्छशी शशिनो ज्वलनो ज्वलनाद्दीपो लघुकः।
ततोऽपि त्वं खद्योत तथापि रे हन्त विस्फुरसि ॥ ]

अत्रानेकेषां शशिप्रभृतीनां स्वरूपलाघवक्रमः। धर्मेण यथा—

मुष्टिभेद्यमभवद्यदुद्भवं कज्जलोत्पलतमालमेचकम्।
तन्मृगाक्षि खलु पश्य लक्ष्यते मालवीचिकुरकुञ्चितं तमः ॥५११॥

अत्रैकस्य तमसो घनत्वलक्षणधर्मोपचयः। अनेकेषां यथा—

विपुलहृदयैरन्यैः कैश्चिज्जगज्जनितं पुरा
विधृतमपरैर्दत्तं चान्यैर्विजित्य तृणं यथा।
इह हि भुवनान्यन्ये धीराश्चतुर्दश भुञ्जते
कतिपयपुरस्स्वाम्ये पुंसां क एष मदज्वरः ॥ ५१२ ॥

अत्र बहूनां महत्वाख्यस्य धर्मस्य क्रमेणापचयः। इह च क्वचित्क्वचिदुदाहरणेषूदाहरणस्वानुगुण्यादिना यः पाठविपर्ययः स्थितस्तस्य लक्ष्यादर्शनशङ्कया नान्यथाभावो विधेयः ॥ ९४ ॥

सम्भावनयान्यथा वातिशयोऽतिशयः ॥ ९५ ॥

क्रमेणोत्तरोत्तरस्मिन्सम्भावनयाऽसम्भावनयातिशयोऽतिशयालंकारः।

जइ देवअं पसण्णं मा मह कारेहि माणुसे जम्मं।
अह जम्मं मा पेम्मं अह पेम्मं मा जणे दुलहे ॥ ५१३ ॥

[ यदि दैवतं प्रसन्नं मा कार्षीर्मम मानुषे जन्म ।
अथ जन्म मा प्रेमाथ प्रेम मा जने दुर्लभे ॥ ]

अत्र जन्मप्रभृतीनां सम्भवसम्भावनस्यातिशयितत्वे यदि जन्माभावं न करोपि तत्प्रेमाभावं कुर्वित्यादिना प्रेमाभावादिसम्भवस्यातिशय उपनिबद्धः । असम्भावनया यथा—

सुअणो ण कुप्पइ व्विअ अह कुप्पइ विप्पिअं ण चिन्तेइ ।
अह चिन्तेइ ण जम्पइ अह जम्पइ लज्जिणो होइ ॥ ५१४ ॥

[ सुजनो न कुप्यत्येवाथ कुप्यति विप्रियं न चिन्तयति ।
अथ चिन्तयति न जल्पति अथ जल्पति लज्जितो भवति ॥ ]

अत्र कोपादीनां क्रमेणासम्भावनातिशयः । यथा च

न भवति भवति न चिरं भवति चिरं चेत्फले विसंवदति ।
कोपः सत्पुरुषाणां तुल्यः स्नेहेन नीचानाम् ॥ ५१५ ॥

दुक्खेहिँ लम्भइ पिओ लद्धो दुक्खेहिँ होइ साहीणो ।
लद्धो वि अलद्धो व्विअ जइ जह हिअअं तह ण होइ ॥ ५१६ ॥

[ दुःखैर्लभ्यते प्रियो लब्धो दुःखैर्भवति स्वाधीनः ।
लब्धोऽलब्ध एव यदि यथा हृदयं तथा न भवति ॥ ]

इत्यादौ प्रियलाभादीनां दुःखेन लभ्यते इत्याद्युक्तेरर्थादसम्भावनातिशयः ॥ ९५ ॥

## उत्तरोत्तरस्य पूर्वपूर्वानुबन्धित्वं विपर्ययो वा शृङ्खला ॥ ९६ ॥

उत्तरोत्तरस्याश्रयत्वादिना पूर्वं पूर्वं प्रति पूर्वस्य पूर्वस्योत्तरमुत्तरं प्रति वा सापेक्षत्वं शृङ्खला । अत्र पूर्वस्य पूर्वस्योत्तरोत्तरहेतुकत्वे कारणमाला, तथा यथापूर्वं परस्य विशेषणतया स्थापनापोहेन एकावली, पूर्वस्योत्तरोत्तरहेतुकत्वे मालादीपकमिति त्रयः शृङ्खलाबन्धेनान्यैरलंकारा लक्षितास्तेषु च शृङ्खलास्वपरिहारेण प्रत्येकं न विच्छित्तिविशेषोऽस्ति येनालंकारभेदः स्यात् । यदि

च कार्यकारणविशेषणविशेष्यभावादिविशेषाश्रयणेन भेदेनाभिधानम्, तद्युत्तरोत्तरमाधाराधेयतास्वस्वामित्वादिसम्बन्धावलम्बनेन शृङ्खलायां बहवोऽलंकारा उपसंख्येयाः प्रसज्येरन्। अत इह लक्ष्यव्याप्त्यर्थं शृङ्खलैव लक्षिता। अस्यां महाविषयायां तेषामन्तर्भावोपपत्तेः। अपि च मालारूपकवदेकस्मिन्यत्र बहूनां यौगपद्येन स्थितिस्तत्र मालात्वं वक्तुमुचितमिह तु तदभावात् कारणमालाद्यभिधानमसमञ्जसमेव। यदपि शृङ्खलादयो उपमाद्यवान्तरभेदा इति तदयुक्तम्। उपमादिव्यतिरेकेण कार्यकारणभावाद्यवलम्बनेनापि शृंखलायास्सम्भवात्। अतश्चोपमादिशृङ्खलाभिमते विषय उपमादीनां शृङ्खलया सह संकीर्णत्वम्। न तूपमादिभेदत्वं यथा।

सेलेव्व जलहराणं सेलाणं व्व जलणिही पुढविणाह।
जलहीणं विअ पाआलं सप्पुरिसाणं तुमं णिलओ ॥ ५१७ ॥
[ शैल इव जलधराणां शैलानामिव जलनिधिः पृथिवीनाथ।
जलधीनामिव पातालं सत्पुरुषाणां त्वं निलयः ॥ ]

अत्र क्रमेण शैलजलधरादीनामाश्रयाश्रयिभाव उपमानत्वेनोपात्तः।

मन्मथः प्रविशति स्म सुरायां सा कुरङ्गकदृशां वदनेषु।
तानि चेतसि महीतिलकस्य क्ष्मापचित्तमथ रागपयोधौ ॥ ५१८ ॥

अत्र मन्मथादीनां उत्तरोत्तरानुप्रवेशः। "सुकअं चिअ परिमोआण कारण" मित्यादावुत्तरोत्तरकारणत्वम्।

इमिणा सरकेण ससी ससिणा वि णिसा णिसाइ कुमुअवणं।
कुमुअवणेण वि पुलिणं पुलिणेण वि महइ हंसउलं ॥ ५१९ ॥
[ अनेन सरकेण शशी शशिनापि निशा निशया कुमुदवनम्।
कुमुदवनेनापि पुलिनं पुलिनेनापि महते हंसकुलम् ॥ ]

अत्रोत्तरोत्तरं भूष्यभूषकभावः।

आकारसदृशप्रज्ञः प्रज्ञया सदृशागमः।
आगमैः सदृशारम्भः प्रारम्भसदृशोदयः ॥ ५२० ॥

अत्रोत्तरोत्तरमुपमानोपमेयभावः।

कुलिसो तालेइ धराधरं महिं कुलिसखण्डिअपतन्तो।
णिवडन्तसेलपहआ मही वि सेसअफणावलअं ॥ ५२१ ॥
[ कुलिशः ताडयति धराधरं महीं कुलिशखण्डितपतन्तः।
निपतच्छैलप्रहता मह्यपि शेषफणावलयम् ॥ ]

अत्रोत्तरोत्तरं पीडनम्।

एतस्मिन्नपि चापरार्कचतुराम्बोधौ महीमण्डले
यो यद्वाञ्छति निश्चितेन मनसा साक्षादुदाकर्णय।
सर्वः कोऽपि जनः श्रियं भगवती सा त्वां त्वमप्यर्थिन-
स्ते च त्वच्चरितानि तानि च दिशां पारं दृशानामपि ॥५२२॥

अत्रोत्तरोत्तरं वाञ्छा।

वाताहारतया जगद्विषधरैराश्वास्य निःशेषितं
ग्रस्तास्ते पुनरभ्रतोयकणिकातीव्रव्रतैर्बर्हिभिः।
ते च क्रूरचमूरुचर्मवसनैर्नीताः क्षयं लुब्धकै-
र्दम्भस्य स्फुरितं विदन्नपि जनो जाल्मो गुणानीहते ॥ ५२३ ॥

अत्रोत्तरोत्तरं वञ्चनम्।

जह बालत्तणलीला जोव्वणसमए जणाण हासेन्ति।
तारुण्णविलसिआइं वि वअपरिणामे तह च्चेअ ॥ ५२४ ॥
[ यथा बालत्वलीला यौवनसमये जनं हासयन्ति।
तारुण्यविलसितान्यपि वयःपरिणामे तथैव ॥ ]

अत्रोत्तरोत्तरस्योपहासकत्वम्।

सौधं यत्र क्वचिदपि न तद्यत्र नोद्यानमन्त-
स्तन्नोद्यानं नवरतिकलाधाम यस्मिन्न बाला।
नासौ बाला प्रभवति न या कुन्दनीलाम्बुजानां
सृष्टिं कर्तुं दिशि दिशि सितश्यामदृष्टिच्छटाभिः ॥ ५२५ ॥

अत्रोत्तरोत्तरं सौधादीन्प्रत्युद्यानवत्त्वादेर्विशेषणत्वं। विपर्ययेण कारणशृङ्खला यथा।

माणो गुणेहिं जाअइ गुणा वि जाअन्ति सुअणसेवाए।
विमलेण सुकअपसरेण सुअणसेवाएँ उट्ठाणं ॥ ५२६ ॥
[ मानो गुणैर्जोषते गुणा अपि जायन्ते सुजनसेवया।
विमलेन सुकृतप्रसरेण सुजनसेवाया उत्थानम् ॥ ]

अत्र पूर्वस्य पूर्वस्योत्तरोत्तरं कारणतयोपनिद्धम्। एवमन्यत्रापि विपर्ययोऽभ्यूह्यः ॥ ९६ ॥

## अन्यधर्मस्वीकारस्तद्गुणः ॥ ९७ ॥

यदा केनचिदर्थान्तरस्य धर्मा गुणादयः स्वीक्रियन्ते तदा तद्गुण। स चान्यगुणस्वीकारोऽर्थात्स्वगुणत्यागे भवति। अन्यथोभयविरोधः स्यात्। अत्र चान्यगुणोपरक्तं वस्तु स्वरूपत एव प्रतीयते। मीलिते तु वस्त्वन्तरत्वं तिरोधीयत इति भेदः। उदाहरणम्—

एकत्र स्फटिकतटांशुभिन्ननीरा
नीलाश्मद्युतिभिदुराम्भसोऽपरत्र।
कालिन्दीजलजनितश्रियः श्रयन्ते
वैदग्धीमिह सरितः सुरापगायाः ॥ ५२७ ॥ शि. ४.२६

अत्र सरितां स्फटिकादिगुणस्वीकार। यथा वा—

इन्दूदयश्चन्दनमिन्दुवक्त्रा-
श्चैत्रस्तथा यस्य सहायसम्पत्।
वपुश्च शृंगारमयं स मन्ये
सन्तापकस्त्वं हरवह्नियोगात् ॥ ५२८ ॥

अत्र हरवह्निगुणस्य सन्तापकत्वस्य स्वीकार। यथा वा

चन्दनासक्तभुजगनिःश्वासानिलमूर्च्छितः।
मूर्च्छयत्येष पथिकान्मधौ मलयमारुतः ॥ ५२९ ॥

अत्र मूर्च्छितसंपर्कान्मूर्च्छोत्पत्तिः।

तं तुज्झ णूण दिण्णं हिमअरवडवग्गिकालकूडेहि।
दूणोसि माणिणिं जह पहिअवहुं जह अ मारेसि ॥ ५२० ॥
[ तत्तव नूनं दत्तं हिमकरवडवाग्निकालकूटाभ्याम्।
दूनोपि मानिनीं यत्पथिकवधूं यच्च मारयसि ॥ ]

अत्र तापनमारणयोरस्वीकारः।

धवलो सि जह वि सुन्दर तह वि तुए मज्झ रञ्जिअं हिअअम्।
राअभरिए वि हिअए सुहअ णिहित्तो ण रत्तोऽसि ॥ ५२१ ॥
[ धवलोऽसि यद्यपि सुन्दर तथापि त्वया मम रञ्जितं हृदयम्।
रागभरितेऽपि हृदये सुभग निहितो न रक्तोऽसि ॥ ]

इत्येवमादौ धवलादे रक्तहृदयनिहितत्वादेः कारणस्य सद्भावेऽपि न रक्तत्वादि जातमिति सति हेतौ तद्रूपाननुहारोऽतद्गुण इत्यतद्गुणालङ्कारो न वाच्यः। हेतुसाकल्ये फलानुत्पत्तिर्विशेषोक्तिरिति विशेषोक्तावन्तर्भावात्। तद्गुणाननुहरणाद्विच्छित्तिभेदेन पृथगलङ्कारत्वे नानाविधकार्यानुत्पत्तिसद्भावेनालङ्कारत्वानन्त्यप्रसंगात्। तस्माद्यस्य कस्यचित्कार्यस्य सति हेतावनुत्पत्तिर्यत्र यत्र तत्र सर्वत्र विशेषोक्तिः।

हेतौ सत्यपि नान्यस्य गुणानुहरणं यदि।
विशेषोक्तिरसाविष्टा न वाच्योऽपि ह्यतद्गुणः ॥

"धवलोऽसि" इत्यादौ पूर्वार्धविरूपकार्योत्पत्तेर्विषमालङ्कार एव न तद्गुणः। धवलस्य रागवत्त्वाभावेऽन्यरञ्जनात्। रागवत्त्वादन्यरञ्जने हि तद्गुणः स्यात् ॥ ९७ ॥

## धर्मसाम्याद्भेदाप्रतीतिर्मीलितम् ॥ ९८ ॥

यत्र गुणक्रियादेर्धर्मस्य समानतयार्थस्यार्थान्तरेणाच्छादितत्वाद्भेदेनाप्रतिपत्तिस्तन्मीलितम्। यथा–

अभेदमूढस्तवकाभिरागता लताभिरीषल्लुलितालिपङ्क्तिभिः।
इयं पुरो मारुतनर्तितालका न लक्ष्यते व्यक्तमवामनस्तनी ॥५२२॥

अत्र वनमध्यगता युवतिर्लताभिस्तुल्याकारत्वाद्भेदेन न लक्ष्यते इत्युक्तम्। न तु चोदाहृते विषये

मलयजरसविलिप्ततनवो नवहारलताविभूषिताः
सिततरदन्तपत्रकृतवक्त्ररुचो रुचिरामलांशुकाः।
शशभृति विततधाम्नि धवलयति धरामविभाव्यतां गताः
प्रियवसतिं प्रयान्ति सुखमेव निरस्तभियोऽभिसारिकाः ॥५३३॥

इत्यादौ पुरोदाहृते गुणसाम्यनिमित्तस्याविवेकस्य सद्भावात्सामान्यालङ्कारः। न तु मीलितम्। अस्य हि सहजेनागन्तुकेन वा चिन्नभूतेन धर्मेण न्यूनगुणस्य वस्तुनोऽधिकगुणेनाच्छादनं रूपम्। यथा–

अपाङ्गतरले दृशौ मधुरवक्रवर्णा गिरः
विलासभरमन्थरा गतिरतीव कान्तं मुखम्।
इति स्फुरितमङ्गके मृगदृशः स्वतो लीलया
तदत्र न मदोदयः कृतपदोऽपि संलक्ष्यते ॥ ५३४ ॥

ये कन्दरासु निवसन्ति सदा हिमाद्रे-
स्त्वत्पातशङ्कितधियो विवशा द्विषस्ते।
अप्यङ्गमुत्पुलकमुद्वहतां सकम्पं
तेषामहो वत भियां न बुधोऽप्यभिज्ञः ॥ ५३५ ॥

अनयोरपाङ्गतरलत्वादिना स्वाभाविकेन मदजनितस्य तस्य चाच्छादनान्मीलितम्। न च सामान्यमीलितयोः परस्परान्तर्भावः। स्वरूपेणावगतस्य हि भेदाप्रतीतिस्सामान्यम्। बलवता तिरोहितत्वात्स्वरूपानवगमो मीलितमिति महाननयोर्भेद इति। उच्यते। पृथक्सामान्यमीलितयोर्लक्षणं न कार्यं, भेदाभावात्। तथा हि यत्र सामान्यं भवद्भिरिष्यते तत्र यस्य भेदानवगमस्तस्य किं स्वरूपमवगम्यते न वा। आद्ये घटपटयोः पटयोरेव वा निजनिजरूपप्रतीत्यास्त्येव भेदप्रतीतिः। तथेहापि स्यादिति न मीलितम्, नापि सामान्यम्। द्वितीये निजरूपस्यानवगमेऽधिकगुणेनाच्छादनमेव निमित्तम्। न

समानगुणत्वम् । तथात्वे लताज्योत्स्नादेरपि समानगुणत्वसम्भवात्कथं नु निजतयानवगमः । न च स्वरूपाच्छादनेऽपि सहजागन्तुकत्वाद्विशेषादलङ्कारभेदो युक्तः प्रतीतिसाम्येनकस्यैवालङ्कारस्य भेदप्रभेदाभिधानोपपत्तेः परिवृत्त्यादिवत् । लतादिगतस्य स्तबकत्वादेरपि सहजकत्वाङ्गिकस्य शक्यत्वाच्च । नापि गुणसाम्यविवक्षया भेदस्यावगमेऽप्यनवगमाभिधानं सामान्यस्य मीलिताद्विशेषः । मदकृतस्याप्यपाकृतरक्तत्वादेर्भेदावगमसम्भवात्तेनोदाहरणेषु समानाभिहारनिमित्तस्य स्वरूपावगमस्य सम्भवादेक एवालङ्कारो वाच्यः स च मीलितनामैव वस्त्वन्तरेणाच्छादनात् ।

भेदो नानुपलम्भस्य बलवद्गुणसङ्गतिः ।
सामान्ये मीलिते तुल्यो हेतुस्तेन न भिन्नता ॥

इति संग्रहः ।

नितम्बबिम्बातिभरेण दोला यथा यथा तारतरं ररास ।
अलक्षितज्यानिनदः क्षितीन्द्रं तथा तथा पुष्पशरो विभेद ॥५३६॥

आसां जलास्फालनतत्पराणां मुक्ताफलस्पर्धिषु शीकरेषु ।
पयोधरोत्सेधविशीर्यमाणः संलक्ष्यते न च्छिदुरोऽपि हारः ॥५३७॥

पूर्वत्र दोलाकूजितेनाच्छादितत्वाज्ज्यानिनादानाकर्णनम् । उत्तरत्र मुक्ताफलानां शीकररूपसमानाभिहाराच्च भेदावगमः । अस्य चाच्छादनीयस्य स्वरूपानवगमो न तु वस्त्वन्तररूपतया प्रतीतिरिति भ्रान्तिमदलङ्कारान्तर्भावाभावः ॥ ९८ ॥

## तस्यां कुतश्चिद्विवेको विवेकः ॥ ९९ ॥

गुणसाम्याद्भेदाप्रतीतौ सत्यामपि केनचिन्निमित्तेन वैलक्षण्यावगतेर्विवेको वेवेकः । यथा

नवाम्बुवाहप्रतिबिम्बवत्यां यत्रोच्चहर्म्यारुणरत्नभूमौ ।
व्यक्तिं लभन्ते सुरसुन्दरीभिः सालक्तकाः प्रावृषि पादमुद्राः ॥५३८॥

अत्रालक्तकपादमुद्राणामरुणरत्नभूमावलक्ष्याणां नवाम्बुवाहप्रतिबिम्बेन भूमेर्नीलिमावगतौ स्फुटतया प्रतीतिः। यथा वा—

पिअदंसणसुहरसमउलिआइँ जइ से ण होन्ति णअणाइं।
ता केण कण्णरइअं लक्खिज्जइ कुवलअं तिस्सा ॥ ५३९ ॥
[ प्रियदर्शनसुखरसमुकुलिते यदि भवतोऽस्या न नयने।
तत्केन कर्णलग्नं लक्ष्यते कुवलयं तस्याः ॥ ]

अत्र नयनात्कुवलयस्य निमीलनेन भेदः। यथा च—

मदामोदेन शङ्केभो भाङ्कारैः शिवशाकरः।
दण्डैश्च पुण्डरीकाणि व्यज्यन्ते यस्य सानुषु ॥ ५४० ॥

अस्य चालक्तकपादमुद्रादेरम्बुवाहप्रतिबिम्बादिसमये प्रत्यक्षेण निजरूपावगमात् स्फुट एवानुमानाद्भेदः। मदामोदेनेत्यनन्तरोदाहृते त्वनुमानेन सह सङ्करः। यथा—

गौराङ्ग्या निजलावण्यमीलितं हेमकङ्कणम्।
कण्ठाश्लेषे वयस्याभिः काठिन्येनान्वमीयत ॥ ५४१ ॥

अत्राप्यनुमानाश्लिष्टत्वमेव ॥ ९९ ॥

## अनुभूतस्यार्थान्तरोपलब्धौ परभागः ॥ १०० ॥

विवेक इत्यनुपज्यते। स्वरूपमात्रेणावगतस्य वस्तुनो वस्त्वन्तरोपलम्भसमये तस्माद्भेदप्रतीतिः परभागः। अस्य च सद्रूपात्सद्रूपस्यान्यथा वा भेदप्रतीतिर्महत्त्वेन तुच्छत्वेन वा भवतीति चत्वारो भेदाः। क्रमेणोदाहरणानि

अण्णमहिलापसङ्गं दे देव करेसु अम्ह दइअस्स।
पुरिसा एकन्त रता ण हु दोसगुणे विआणन्ति ॥ ५४२ ॥
[ अन्यमहिलाप्रसङ्गं प्रार्थये दैव कुरुष्वास्माकं दयितस्य।
पुरुषा एकत्र रता न खलु गुणदोषान् विजानन्ति ॥ ]

अत्रान्यमहिलाप्रसङ्गेन दयितेन निजाया वल्लभाया महत्त्वं ज्ञायत इत्यर्थादवगम्यते।

दृश्यन्ते मानसोत्तंसाः कलहंसा यदि क्वचित्।
गतौ चरणयोस्तस्याः प्रेक्ष्यते यावदन्तरम् ॥ ५४३ ॥

अत्र हंसदर्शने तरुणीगते• प्रतीतिस्सम्भाविता ।

णूणं दाव सचीए वहु मण्णइ सुन्दरो तुमं सक्क ।
तेलोक्कसुन्दरी सा जाव ण णअणेसु संघडइ ॥ ५४४ ॥
[ नूनं तावच्छच्या बहु मन्यसे सुन्दरस्त्वं शक्र ।
त्रैलोक्यसुन्दरी सा यावन्न नयनेषु संघटते ॥ ]

अत्रानुभूतायाः शच्यास्त्रैलोक्यसुन्दरीदर्शनेन तुच्छत्वावगमो निबद्धः ।

सो च्चेअ सुणइ सच्चं वअणं पिसुणाण अधिअकडुअं ति ।
जेण सहि कालकूडो भक्खिज्जइ देहिजीअहरो ॥ ५४५ ॥
[ स एव शृणोति सत्यं वचनं पिशुनानामधिककटुकमिति ।
येन सखि कालकूटो भक्ष्यते देहिजीवहरः ॥ ]

अत्रासद्रूपात्कालकूटात्तथाविधस्यैव खलवचनस्य तदवगमे महत्त्वप्रतीतिः ।

चंद्रार्कचक्रघटनद्युरथाधिरूढं
तं चण्डताण्डवदशं गिरिशं प्रपद्ये ।
यद्बाहुघातकलया परिताड्यमानो
वज्राहतिं सुखममन्यत शैलवर्गः ॥ ५४६ ॥

अत्र शैलादीना पीडाकारित्वेनासद्रूपाद्बाहुघाताद्वज्राहतेस्तथाविधायास्तुच्छत्वेन प्रतीतिः । अस्य चोपमानाधिकगुणोपमेयोपनिबन्धरूपाद्व्यतिरेकाद्वस्त्वन्तरावगमसमये वैलक्षण्यप्रतीतिरूपस्य सुव्यक्तो भेदः । किं चोपमेयादपरस्य यत्र न्यूनत्वं स एष व्यतिरेक उक्तः । अस्मिंस्तुच्छत्वं महत्त्वयोगो वैकल्पिकोऽर्थस्य परप्रतीताविति । अपि चौपम्यजीवित एव व्यतिरेक• । अयं तु "अण्णमहिला" इत्यादौ तत्परिहारेणापि भवति । न ह्यत्रान्यमहिलाया उपमानभूताया• सकाशान्महत्त्वमिति प्रतीति• । एवमुपमानव्यतिरिक्तस्यार्थान्तरोपलम्भेऽनुभूतस्य तुच्छत्वं महत्त्वं वा लक्ष्यते इत्यनुमन्तव्यम् ॥१००॥

## निगूढस्य प्रतिभेद उद्भेदः ॥ १०१ ॥

यत्र किञ्चिदाच्छादितत्वेन निगूढमपि कुतश्चित्प्रतिभिद्यते प्रकटीभवति स उद्भेदः। यथा—

सूरच्छलेण पुत्तअ कस्स तुमं अञ्जलि पणामेसि।
हासकडक्खुम्मिस्सा ण होन्ति देवाणं जेक्कारा॥ ५४७॥
[ सूर्यच्छलेन पुत्रक कस्य त्वमञ्जलि प्रणमयसि।
हासकटाक्षमिश्रा न भवंति देवानां ज्योत्काराः॥ ]

अत्र वातायनस्थितां प्रच्छन्नकामुकीं प्रति तदभिलषितचौर्यरताभ्युपगमार्थमञ्जलिर्बद्धः सूर्योपस्थानमिषेण प्रच्छादितोऽपि हासकटाक्षादिना मया चेतितः इति निगूढप्रतिभेदः।

गहरइसु ओच्चिएसु वि फलहीणेसु उअ वहुआए।
मोहं भमइ पुलइओ सेदगलदङ्गुलीहत्थो॥ ५४८॥
[ गृहरतेषूच्चितेषु अपि फलहीनेषु पश्य वध्वाः।
मोघं भ्रमति पुलकितः स्वेदगलदङ्गुलीहस्तः॥ ]

अत्रोन्नतकर्पासवाटिकास्थितनिभृतरमणसङ्गमार्थं गता उच्चितकर्पासेष्वपि वृत्तेषु तदुपगूहनेन प्रस्विन्नं वृथैव करं भ्रमयतीति काचिद्विदग्धा सखी बोधयति। यथा च—

परिओसविअसिएहि भणिअं अच्छीहिँ तेण जणमज्झे।
पडिवण्णं तीअ वि उव्वमन्तसेएहि अङ्गेहि॥ ५४९॥
[ परितोषविकसिताभ्यां भणितमक्षिभ्यां तेन जनमध्ये।
प्रतिभिन्नं तस्या अपि उद्गमत्स्वेदैरङ्गैः॥ ]

अत्र केनचित्प्रार्थितस्य कयाचिदभ्युपगमः कृतोऽङ्गस्वेदोद्भिन्नः। एवमादौ च प्रतिभेदस्य शब्दोपात्तत्वादुद्भेदो वाच्यः। यथा च—

अलिअपसुत्तअविणिमीलिअच्छ दे सुहअ मज्झ ओआसं।
गण्डपरिउम्बणापुलइअङ्ग ण पुणो चिराइस्सं॥ ५५०॥

[ अलीकप्रसुप्तविनिमीलिताक्ष देहि सुभग ममावकाशम् ।
गण्डपरिचुम्बनापुलकिताङ्ग न पुनश्चिरयिष्ये ॥ ]

अत्रालीकप्रसुप्तस्य पुलकेनोद्भेदः । इह तु—

सत्कार्यसिद्धौ तव हन्त यान्त्या मार्गे पुरोऽभूत्परुषः समीरः ।
यद्ग्राहतेऽयं ललितालकत्वं पर्यस्तबन्धः कबरीनिवेशः ॥ ५५१ ॥

संस्पृश्य तं दुश्चरितैकचञ्चुं सखि त्वया किं विहितोऽवगाहः ।
आर्द्राणि गात्राणि तवासते यद्धस्ते च यन्निरस्तिलकं ललाटम् ॥५५२॥

स एव कस्तूरिकपङ्कजन्मा दोपं ध्रुवं ते व्यधिताङ्गरागः ।
बिभर्पि यत्सौरभसङ्गिभृङ्गदंशं व्रणैर्भङ्गुरमङ्गमङ्गम् ॥ ५५३ ॥

दूतीस्तदानीं दयितोपभोगलक्ष्माकुलाङ्गीरुपलभ्य कोपम् ।
स्वभ्रूलतावक्रिममार्गशिष्यैरित्थं तरुण्यो वचनैरधुन्वन् ॥ ५५४ ॥

आद्यश्लोकेष्वनभिधेयत्वेनोद्भेदस्य व्यंग्यस्यापि चरमश्लोकवाच्यसिद्ध्यङ्गत्वेन गुणीभूतस्य ध्वनिः । स तु यथा—

विहलंखलं तुमं सहि दट्ठूण कुडेण तरलतरदिट्ठिम् ।
वारप्फंसमिसेणअ अप्पा गुरुओ त्ति पाडिअ विहिण्णो ॥५५५॥

[ विशृङ्खलां त्वां सखि दृष्ट्वा कुटेन तरलतरदृष्टिम् ।
द्वारस्पर्शमिषेणात्मा गुरुक इति पातयित्वा विभिन्नः ॥ ]

अत्र संकेतस्थाने कान्तमप्राप्यैव घटं गृहीत्वा गतया त्वयानुयातं तं दृष्ट्वेच्छयैव पुनर्जलानयनमिषेण उत्संगमार्थमेतत्कृतमिति ज्ञातं मयेति व्यंग्ये तद्भेद ॥ १०१ ॥

## गूढसाकांक्षोपनिबद्धं गूढम् ॥ १०२ ॥

यत्रानभिहितस्य गूढस्य वस्तुनोऽनुपादानाद् गूढाक्षेपक साकांक्षं वस्तूपनिबध्यते तद्गूढार्थत्वाद्गूढम् । तत्र साकाङ्क्षत्वेऽपि प्रस्तुतस्यार्थस्य कार्यादिमुखेन झगित्येव प्रतिपत्तेः गूढवस्त्वाभावात् । इह तु प्रहेलिकादिवद्गूढार्थत्वम् । उदाहरणम्—

सामाइ सामलिज्जइ अद्धच्छिपलोइरीअ मुहसोहा।
जम्बूदलकअकण्णावअंसभरिए हलिअपुत्ते ॥ ५५६ ॥
[ श्यामायाः श्यामलायते अर्धाक्षप्रलोकिकया मुखशोभा।
जम्बूदलकृतकर्णावतंसभ्रमणशीले हालिकपुत्रि ॥ ]

अत्र जम्बूवनदत्तसंकेता त्वं नागता पुनस्तत्राहं गत इति प्रकाशनार्थं भ्रमणशीलं हालिकपुत्रं दृष्ट्वा मुखशोभायाः श्यामत्वमिति मुखशोभाश्यामत्वरूपो वाच्योऽर्थः संकेतवृत्तान्तेन गूढेन साकांक्षः। एवं च

ग्रामतरुणं तरुण्या नववञ्जुलमञ्जरीसनाथकरम्।
पश्यन्त्या भवति मुहुर्नितरां मलिना मुखच्छाया ॥ ५५७ ॥

इत्यादावयमेवालङ्कारो न गुणीभूतव्यंग्यत्वम्। एवमादौ गूढार्थस्य व्यंग्यतासंभावनाया अप्यभावादित्यावेदितप्रायम्। यथा वा—

घासं गोभ्यः किं न दत्तेति काञ्चिच्छ्रुत्वा गेहे कामिनीमादिशन्तीम्।
भिक्षाभोजी तद्गृहे रूक्षगात्रस्तूर्णं प्रास्यत् काञ्चिके मण्डकुण्डम् ॥५५८॥

अत्र गोग्रासदानकर्तव्यश्रवणाद्धेनुकार्यकारिणि काञ्चिके घासतुल्यमण्डकुण्डप्रक्षेपकर्तव्यतया भिक्षुकोऽनुज्ञात इति गूढार्थः। क्वचित्प्रश्नपूर्वकमपि भवति। यथा—

जइ देवरेण भणिआ खग्गं घेत्तूण वच्च राअकुलं।
ता कीस मुद्धमुहिआ सअणम्मि णिवेसअइ दिट्ठिं ॥ ५५९ ॥
[ यदि देवरेण भणिता खड्गं गृहीत्वा व्रज राजकुलं।
तत्कस्मान्मुग्धमुखी शयने निवेशयति दृष्टिम् ॥ ]

अत्रालक्तकपादमुद्रादर्शनेन पुरुषायितसूचिकेनानभिहितत्वाद्गूढेन पुरुषायितस्योन्निद्रत्वात् खड्गं गृहीत्वैवमादिना प्रतिपादकादुद्भेदसूक्ष्माभ्यां सह सङ्कीर्णम्। यथा वा—

दट्ठूण पुण्णचन्दं पोसिअपइआइ कीस पम्मुत्ता।
चित्तलिहिअस्स हरिणो चक्के रोसारुणा दिट्ठी ॥ ५६० ॥

[ दृष्ट्वा पूर्णचन्द्रं प्रोषितपतिकया कस्मात्प्रमुक्ता।
चित्रलिखितस्य हरेश्चक्रे रोषारुणा दृष्टिः ॥ ]

अत्र किमित्यनेन दुरात्मना राहोः कण्ठच्छेदः कृतः, अकृते हि तेन निगीर्णस्य चन्द्रस्य पुनरुद्भवो न स्यादिति गूढार्थः कस्मात्प्रमुक्तेति प्रश्नपूर्वक उपनिबद्धः। प्रश्नपूर्वकत्वादन्यस्य पर्यायोक्ताद्भेदः। न हि तत्र उदाहृतविषये प्रश्नपूर्वकतास्ति युज्यते चेति ॥ १०२ ॥

## सूक्ष्मार्थस्य सूचनं सूक्ष्मम् ॥ १०३ ॥

यत्र सूक्ष्मः स्थूलमतिभिरसंलक्ष्यो वाक्येन संज्ञया वा गूढतया परस्मै प्रकाश्यते तत्सूक्ष्मम्। उदा०–

रच्छाभमिरं जारं तरुणी दट्ठूण संकहइ सहिं।
एण्हिं चर क्खु सूरे सरिअं संज्झाइ तह यामो ॥ ५६१ ॥
[ रथ्याभ्रमणशीलं जारं तरुणी दृष्ट्वा संकथयति सखीम्।
इदानीं चर खलु सूर्ये सरितं संध्यायां तद्यामः ॥ ]

अत्र संकेतकालजिज्ञासमानमुपपतिं प्रति कयाचित्सन्ध्यायां सरित्तटभागमिष्यामीति गूढतया वाक्येन प्रकाशितम्। न चात्र ध्वनिः। उत्तरार्धव्यंग्यस्यापि पूर्वार्धवाच्यसिद्ध्यङ्गत्वम्। तेन व्यङ्ग्यस्य गुणीभावादलंकारता।

इह तु—

णोल्लेइ अणद्दमणा अत्ता मं घरभरम्मि सअलम्मि।
खणमेत्तं जइ संझाइ होइ ण व होइ वीसामो ॥ ५६२ ॥
[ नुदत्यनार्द्रमनाः श्वश्रूर्मां गृहभरे सकले।
क्षणमात्रं यदि संध्यायां भवति न वा भवति विश्रमः ॥ ]

ध्वनिरेवोपपतिसंबोधनादेर्वाक्यार्थोपारोहाभावात्। "जइ देवरेण" इत्यादौ "खग्गं घेत्तूण" इत्यादिना वाक्येनैव गूढार्थस्य प्रतिपादनम्। संज्ञादिना यथा—

यत्र कर्णोत्पलन्यस्तहस्ता दीपावलोकिनी ।
दृष्ट्वा वधूः प्रियोपान्ते सखीभिः प्रतिमुच्यते ॥ ५६३ ॥

अत्र कर्णोत्पलहस्तन्यासादिना वध्वा रतिं प्रत्यभिप्रायः सखीभ्यः निवेदितः । यथा वा—

वक्त्रस्यन्दिस्वेदबिन्दुप्रबन्धै-
र्दृष्ट्वा भिन्नं कुङ्कुमं कापि कण्ठे ।
पुंस्त्वं तन्व्या व्यञ्जयन्ती वयस्या
स्मित्वा पाणौ खड्गलेखां लिलेख ॥ ५६४ ॥

अत्र खड्गलेखनेन पुरुषायितं प्रकाशितम् । अत्र चाकारेणेङ्गितेन वा संलक्षितस्य वार्थस्य परं प्रति प्रकाशनमिति द्विभेदत्वमिति न वाच्यम् । "जइ देवरेणे"त्यादावर्थान्तरेण पादमुद्रादिना संलक्षितस्यापि प्रकाशनस्य निदर्शनात् । कचित्पुनः संलक्षितस्य प्रकाशनाभावेऽपि निजाभिप्रायादिप्रकाशनेऽपि सम्भवतीति संलक्षितस्य सूक्ष्मार्थप्रकाशनं सूक्ष्ममिति लक्षणमव्यापकं यथात्रैव " यत्र कर्णोत्पल " इत्यादौ यथा वा—

णिअकण्ठसंठिओ किर विअरीअरओसुआएँ तरुणीए ।
रेहइ तुज्झ त्ति कओ हारो दइअस्स कण्ठम्मि ॥ ५६५ ॥
[ निजकण्ठसंस्थितः किल विपरीतरतोत्सुकया तरुण्या ।
राजते तवेति कृतो हारो दयितकण्ठे ॥ ]

अत्र विपरीतरताभिप्रायो निजहारार्पणेन तव शोभत इति शब्देन चान्यतो लक्षित एव प्रकाशितः । न चैवमादावनलंकारता उदाहरणान्तरवच्चारुताप्रतीतेः । नाप्यलंकारान्तरत्वम् । एवंविधेषु भेदेष्वलंकारान्तरकथनाप्रसंगात् । इह तु

पाहुणिए तम्मग्गे णेव तुए जवजवेण गन्तव्वं ।
मा तत्थ तुज्झ अङ्गाणि कण्टएहि खविज्जन्ति ॥ ५६६ ॥
[ प्राघूर्णिके तन्मार्गेण नैव त्वया जवेन गन्तव्यम् ।
मा तत्र तवाङ्गानि कंटकैः क्षप्यन्ताम् ॥ ]

फरुसवणे इह माए मीलअवअणंव तुमएँ गन्तव्वं ।
मा तुह वि हारइज्जउ तअरिलआए वअणसोहा ॥ ५६७ ॥
[ परुषवने इह मातर्वर्णितवदनमेव त्वया गन्तव्यम् ।
मा तवापि ह्रियतां तगरिकालतया वदनशोभा ॥ ]

दूत्यां कामुकोपभोगस्य भावितया संभाव्यमानस्य शब्दानुपात्तत्वेन निषेधो व्यङ्ग्य इति सूक्ष्मालङ्कारध्वनिरेव न तूद्भेदो व्यङ्ग्य उद्भेदकस्याङ्गक्षतादेस्तदानीमभावात् । नापि व्याजोक्तिः । उद्भेदप्रच्छादनेन नायिकायास्तात्पर्याभावात् । प्रियसङ्गमनिषेधमात्रतात्पर्येण वाक्यप्रवृत्तिः ॥१०३॥

## उद्भेदप्रच्छादनं व्याजोक्तिः ॥ १०४ ॥

यत्राशंक्यमानस्योद्भेदस्योत्पन्नस्य वा वचनेन चेष्टादिना वा प्रच्छादनं सा चतुर्विधा व्याजोक्तिः । यद्यपि चेष्टादिना प्रच्छादनरूपस्य भेदद्वयस्योक्त्यभावः तथाप्युद्भेदप्रच्छन्नात्मकस्य लक्षणस्य समानत्वात्तत्राप्युपचाराद्व्याजोक्तिः इति संज्ञानामज्ञता प्रायशः संज्ञानां यथाकथंचित्प्रवृत्तेरेवमलंकारान्तरसंज्ञानामपि तत्तद्भेदविषयाणां स्वयमेवाभ्यूह्यम् ।

गहवइ गओम्ह सरणं रक्खसु एअं त्ति अडअणा भणिरी ।
सहसागअस्स तुरिअं पइणो च्चिअ जारमप्पेइ ॥ ५६८ ॥
[ गृहपते गतोऽस्माकं शरणं रक्षैतमित्यसती भणित्वा ।
सहसा आगतस्य त्वरितं पत्युरेव जारमर्पयति ॥ ]

अत्राशंक्यस्योद्भेदस्यादावेव शरणागतोक्त्या प्रच्छादनम् । अत्र च जारमर्पयतीति जारस्योक्तत्वेन न ध्वनिः । इह तु—

दृष्टिं हे प्रतिवेशिनि क्षणमिहाप्यस्मद्गृहे दास्यसि
प्रायो नैव शिशोः पितास्य विरसाः कौपीरपः पास्यति ।
एकाकिन्यपि यामि तद्वरमितः स्रोतस्तमालाकुलं
नीरन्ध्रास्तनुमालिखन्तु जरठच्छेदा नलग्रन्थयः ॥ ५६९ ॥

उपपतिरमणार्थं गमनादेर्वाक्योपहारोहाभावान्नखक्षतादिमुखेनोद्भेदस्याशंक्यमानस्य नीरन्ध्रा इत्यादिकया उक्त्या प्रच्छादनेन व्याजोक्तिध्वनिरेव।

पक्खालणकवडेण जारंदसणे चइअपुव्वपरिहाणा।
कद्दमिअमहिलसइ छिण्णाली पाउसासारे ॥ ५७० ॥
[ प्रक्षालनकपटाज्जारदर्शने त्यक्तपूर्वपरिधाना।
कर्दमितमभिलषति पुंश्चली प्रावृडासारे ॥ ]

अत्रोपपतिसमीपाभिसरणसमये पूर्वभाविना कर्दमलेपादिनाशंक्यमानस्योद्भेदस्य प्रक्षालनव्याजेन पूर्वपरिधानपरित्यागपूर्वकं कार्दमिकवस्त्रपरिधानात्मिकया चेष्टया प्रच्छादनम्।

अहअं लज्जालुइणी तस्स अ उम्मच्छराइँ पेम्माइं।
सहिआअणो वि णिउणो अलाहि किं पाअराएण ॥ ५७१ ॥
[ अहं लज्जावती तस्य चोन्मत्सराणि प्रेमाणि।
सखीजनोऽपि निपुणः अपगच्छ किं पादरागेण ॥ ]

अत्र भाविविपरीतरतोद्भेदस्य पादरागनिवारणेनाच्छादनम्। यथा वा—

शैलेन्द्रप्रतिपाद्यमानगिरिजाहस्तोपगूढोच्छलद्-
रोमाञ्चादिविसंस्थुलाखिलविधिव्यासङ्गभङ्गाकुलः।
हा शैत्यं तुहिनाचलस्य करयोरित्यूचिवान् सस्मितं
शैलान्तःपुरमातृमण्डलगणैर्दृष्टोऽवताद्वः शिवः ॥ ५७२ ॥

अत्र रोमाञ्चादिमुखेनोद्भिन्नस्य मदनाकूतस्य हा शैत्यमित्युक्त्या प्रच्छादनम्।

त्वय्यर्धासनभाजि किन्नरगणोद्गातैर्भवद्विक्रमै-
रन्तःसंभृतमत्सरोऽपि भगवानाकारगुप्तौ कृती।
उन्मीलद्भवदीयदक्षिणभुजारोमाञ्चविद्धोच्चरद्-
बाष्पैरेव विलोचनैरभिनयत्यानन्दमाखण्डलः ॥ ५७३ ॥

अत्र पुलकस्मिताभावमुखेनोद्भिन्नस्य मत्सरस्य रोमाञ्चवेथनिबन्धनेनानन्द-सूचकेन बाष्पोद्भवेन प्रच्छादनम् । इह तु

कस्स व ण होइ रोसो दट्ठूण पिआइ सव्वणं अहरं ।
सभमरपउमग्घाइणि वारिअवामे सहसु एण्हिं ॥ ५७४ ॥
[ कस्यैव न भवति रोषो दृष्ट्वा प्रियायाः सव्रणमधरम् ।
सभ्रमरपद्माघ्राणशीले वारितवामे सहस्वेदानीम् ॥ ]

अत्र दृष्टाधरदर्शनेनोद्भिन्नव्याजोक्तिर्ध्वनिरेव ।

उद्भेदस्य निरूपणं स्वरसतो हेत्वन्तराचेद्भवे-
स्त्यूहः समधर्मकोत्कटगुणप्रच्छादनान्मीलितम् ।
व्याजोक्तिरभिसन्धिपूर्वकतया चेष्टादिनोक्त्याऽथवा
व्याजेन प्रतिभेदगूहनमतो युक्तं विविक्तं वपुः ॥ इति ॥१०४॥

## अन्यथा सम्भावितयोश्शब्दार्थयोरन्यथायोजनं वक्रोक्तिः ॥ १०५ ॥

यत्र वक्त्रा श्रोत्रा वा शब्दस्यार्थस्य वान्यथा सम्भावितस्य प्रकारान्तरेण योजनं सा वक्रोक्तिः । अस्याश्च क्वचिच्छ्लेषेण काका धर्मसामान्येन वान्यथा योजनम् । क्वचित्त्वौपचारिके प्रयोगे मुख्यार्थापादनम् । कुत्रचिदर्थान्तर एव योजनम् । क्वापि संभावितेऽपीत्यनेकप्रकारा वक्रोक्तिः । उदाहरणम्—

खेदः किं खलु दयिते न वेत्सि रविमण्डलं जगद्विदितम् ।
न क्रोधः कर्तव्यो जलचरमनघो न जातु पश्यामि ॥ ५७५ ॥
कोऽपस्त्यक्तुं योग्यो यस्य पिपासा न सम्भवति ।
सन्त्यज मानिनि मानं किमनेन ममाधुनानेन ॥ ५७६ ॥

कान्ते नितान्तमेतैर्वचनैः कुपितेव लक्ष्यते भवती ।
क इवोच्यते न वचनैरुच्चैरागांस्यपह्नोतुम् ॥ ५७७ ॥

न मयाकार्यपराधः किमपह्नवनीयमत्र दयितेऽस्ति ।
सत्यमिदमहमिवान्या न शक्यते काप्यधःकर्तुम् ॥ ५७८ ॥

इत्यादौ श्लेषेणान्यथा योजनम् ।

मा प्रवेक्ष्यति कोप्यन्तर्मा शब्दः श्रूयते बहिः ।
वाक्यं यत्र नवोढानामिति कान्तैरनूद्यते ॥ ५७९ ॥

अत्र सङ्गमनिषेधार्थस्य मेति वाक्यस्य नवोढाभिः कार्षीरित्यादि अर्थावसेयपदान्तरसम्बन्धस्य हेतुत्वेन प्रवेक्ष्यतीत्यादिवाक्यान्तरं प्रयुक्तं कान्तैनैकवाक्यतया काकुप्रयोगमुखेन संगमयुक्तार्थत्वेन योजितम् ।

एष श्रीकण्ठकण्ठच्छविरनभिमतो राजहंसव्रजानां
सद्यस्तापं प्रजानां प्रशममुपनयन्नच्छधाराजलेन ।
कुर्वन्दिक्चक्रवालाक्रमणमुदयते देव किं वारिवाहो
मा मैवं मालवेन्द्रो परिमल कतरस्तर्हि राजन्नसिस्ते ॥ ५८० ॥

अत्र खड्गस्य बाहुगतकालनादिधर्मसम्बन्धादन्यधर्मयोगाद्वारिवाहसदृशस्यार्थावसेयत्वेन सामानाधिकरण्याद्यभावेन रूपकानुपपत्तौ प्रतिमालङ्कारोपस्कृतकालत्वादिधर्माणां वारिवाहगतत्वेन श्रोत्रा संभावितानां वक्त्रा खड्गगतत्वेन योजना कृतेति धर्मसाम्यादङ्गीभूता वक्रोक्तिः । यथा वा—

आकृष्यादावमन्दग्रहमलकचयं वक्त्रमासज्य वक्त्रे
कण्ठे लग्नः सुकण्ठः प्रभवति कुचयोर्दत्तगाढाङ्गसङ्गः ।
बद्धासक्तिर्नितम्बे पतति चरणयोर्यस्स तादृक्प्रियो मे
बाले लज्जा निरस्ता न हि न हि सरले चोलकः किं त्रपाकृत् ॥५८१॥

अत्र लज्जा निरस्तेत्युक्त्या सामर्थ्यावसितस्य कान्तस्य सम्बन्धिभिरलकाकर्षणादिभिर्धर्मस्य चोलकेऽपि योगात्पूर्ववत् प्रतिमयोक्तिमुखेनोद्भिन्नस्य तथाविधरमणाभिप्रायस्य च लोकोक्त्या प्रच्छादनात् व्याजोक्त्या सह संकीर्णवक्रोक्तिः । उपचारवक्रोक्तिर्यथा—

नैते तन्वि कचाः कचाः स्मरधनुर्ज्यानादमेघध्वनि-
प्रोद्भिन्नास्तरलास्तु तार्क्ष्यमणयः सत्यं चकासत्यमी ।
त्वद्विश्लेपविवव्यथासु(?) ननु मे नो किञ्चिदेभिः कृतं
स्वास्त्यास्तान्(?) सुभगो त्वदापरमतो गारुत्मतस्त्वं मणिः ॥५८२॥

अत्र मुख्यार्थावलम्बनेन तार्क्ष्यमणि तस्यारोपितस्यायुक्तत्वापादनेनान्यथा योजनम् ।

मलअपवणपहाविएँ माए मा णिवस हम्मिओआसे ।
पिअपरिमललोहिअआ मुद्धे तेणेव्व णिवसामि ॥ ५८३ ॥
[ मलयपवनप्रधाविते मातर्मा निवस हर्म्यावकाशे ।
प्रियपरिमललोभिता मुग्धे तेनैव निवसामि ॥ ]

अत्र मलयपवनस्य हर्म्यवासनिषेधकतया नायकया योजनमित्यत्रार्थ-वक्रोक्तिरेव । यथा वा "बाल इति सुतरामपरित्याज्योऽस्मि रक्षणीय इति भवद्भुजपञ्जर रक्षास्थान" इत्यादि । अत्र बालत्वादिकं प्रस्थाननिषेध-कतया राज्यवर्धनेन सभावित श्रीहर्षेण प्रस्थाननिमित्तकतया योजितमित्यर्थ-वक्रोक्तिरेव ।

अहमस्थितपङ्कजोत्करः किमुदञ्चचरणाञ्चितक्रमः ।
कदलीमभिभूय वर्तते करभोरुस्स किमूरुडम्बरः ॥ ५८४ ॥

पृथुता सति दुस्सतां(?) वहत्परिणाहो जघनस्य किं घनः ।
सहसार्पितभङ्गसम्भ्रमः किमु पश्य स्थलिनः स्वभावतः ॥५८५॥

शिखिदीर्घकलापसन्निभः कचहस्तः किमु सन्नतभ्रुवः ।
स च वात तथा स चामरो ननु कस्त्वद्विरहस्सुदुस्सहः ॥५८६॥

अत्र श्रोत्रोपस्थितपङ्कजोत्करत्वादि चरणक्रमादित्वेन संभावितं वक्त्रा तत्तदभ्युपगमेन विरहरूपतयापि योजितम्

सखि क्व गच्छामि मधुव्रतालीपू(?)ले वलाद्वलगति किं शु
मुग्धे भयं मुञ्च मया हि कोपादमुत्र मुक्तं करपत्रमेतद् ॥
हा देव नानाद्रुमसंकटेऽस्मिन्नशोकलम्बास्फुरितस्मयेन ।
उद्याननाम्नस्तव वैरिणोऽस्य मया ज्वलन्नुल्मुक एष मुक्तः ।
आविर्भवत्याशु पिकावलीयमितो हहा कं शरणं व्रजामि ।
त्वदीयशापक्षपितायुषोऽयं मधोस्समागच्छति कालमार्गः ॥
इत्थं कृशाङ्ग्यो विरहज्वरार्तास्सख्यश्च तास्सान्त्वनकौशलि
पुष्पावने(?) पुष्पति मण्डिमानमन्योन्यमुक्तीः कलयांबभूवुः

अत्र प्रस्तुतस्य मधुपमालादेर्वस्तुनोऽर्थसामर्थ्यावसिते निषेधे करपत्रादेरारोपादार्थापह्नुतेर्विरहिण्या मधुपमालादिरूपतया सम्भावित सख्या करपत्रादिरूपत्वेन योजनादिरूपतया वक्रोक्तिरङ्गम्। यत्र वक्त्रारोपविषयस्याभिधानेऽपह्नवकारणं तत्र शुद्धापह्नुतिः वक्त्र वक्रोक्तिसंकीर्णेति ॥ १०५ ॥

## सम्यक् स्वभाववर्णनं स्वभावोक्तिः ॥ १०६ ॥

द्विविधो वस्तुनः स्वभावः स्थूलः सूक्ष्मश्च। तत्र कवितृमा स्थूलः। तस्य वर्णने न कश्चिदलंकारः। सर्वस्य काव्यस्य स्वभावोक्तिप्र सम्यग्वर्ण्यमानस्तु स्वभावः सूक्ष्मः। स तु महाकविगोचरः। तस्य स र्ण्यमानस्यान्यूनानतिरिक्तत्वेन स्वभावोक्तिः। न तु साधारणस्य रू देस्तत्तद्बालादिगतस्य शब्देन प्रतिपादनमपि तु यथैव वस्तु तथैव प्रति मिति वस्तुसंवादिनी यत्र शब्दात्प्रतिपत्तिर्भवति तत्रैवालंकारः। रस तु सामाजिकस्य निजवासनाभिव्यक्तेर्हृदयसंवादः। भाविके तु परोक्ष अपरोक्षतयावभासनमिति विवेकः। उदाहरणम्—

अंके न्यस्योत्तमाङ्गं प्लवगबलपतेः पादमृक्षस्य हन्तुः
कृत्वोत्सङ्गे सलीलं त्वचि कनकमृगस्याङ्गमाधाय शेषम्।

धावइ विअलिअधम्मिल्लसिचअसंजमणवावडकरग्गा।
चन्दिलभअविवलाअन्तडिम्भपरिमग्गिणी घरिणी॥ ५९२॥
[ धावति विघटितधम्मिलसिचयसंयमनव्यापृतकराग्रा।
चन्दिलभयविपलायमानडिम्भमन्विपन्ती गृहिणी॥ ]

हेरम्बेऽपि हरीश्वरे नखमुखैः कण्डूयमाने गलं
कुर्वन्पुच्छविवर्तनानि विरतो रोमन्थलीलायितात्।
सम्मीलन्नयनं विसंस्थुलचलत्सास्नं नतोन्नामित-
ग्रीवं निश्चलकर्णमीश्वरबलीवर्दस्सुखं मन्यते॥ ५९३॥

अन्यालङ्कारसंसर्गे स्वभावोक्त्यादि यद्यपि।
वाक्यार्थीभावविरहादङ्गमेव तथापि तु॥

यत्रोत्कटतया भाति तत्राङ्गित्वेन युज्यते।
स्वभावोक्त्याद्यलङ्कारस्तस्मादन्यत्र संकरः॥

इति परिकरः। ननु च सूक्ष्मस्वभावस्योपमादिवत्साक्षात्पारम्पर्येण वा शब्दवृत्तेनासंसृष्टत्वात्कथमलङ्कारता स्वभावोक्तेः। एकत्रोल्लिखितस्यापरत्राद्भुतादेस्तत्तच्छब्देन संस्पर्शात्। न तूल्लेखादेरपि तत्संस्पर्शः। तेनैवमादावर्थव्यक्तिगुणकृतमेव चारुत्वमिति न युक्तम्। तथा हि यत्राप्रसिद्धस्य वस्तुनः सम्यगवगमार्थं प्रसिद्धगुणमुपमानमुपादीयते तत्रोपमादिरलंकारस्तद्वत्प्रकरणान्तरेणापि सम्यगवगमः किमिति नालङ्कारत्वेन गण्यते। शब्दसंस्पर्शश्च श्लेषातिशयोक्त्यादावपि नास्तीति सोऽपि नालङ्कारः स्यात्। तत्रानेकार्थलाक्षणिकादिशब्दप्रयोगादस्त्येवेति चेत् वाक्यान्तरवैलक्षण्येन सम्यक्स्वभावप्रतिपादकपदसंभवात्तुल्यत्वम्। एवं प्रतिभादावपि ज्ञेयम्। यथोपमानादेस्सत उपनिबद्धत्वं नोपनिबद्धादुपमानता तथोल्लिखितादेरुपनिबन्धेऽपि न दोषः। यत्र च स्वाभाविको धर्मोऽर्थादेश्चारुत्वनिमित्तं स गुणत्वेन कामं कथ्यतां न तु कविकौशलजृम्भितोऽपि गुणमध्यपाठापत्तेः। एवं प्रतिभाभाविकादेरपि ज्ञेयम्॥ १०६॥

विप्रकृष्टस्य प्रत्यक्षायमाणत्वं भाविकम् ॥ १०७ ॥

देशकालाभ्यां स्वभावेन वा विप्रकृष्टस्यार्थस्य साक्षाद्ग्रहणायोग्यस्यापि सामग्रीबलेन प्रत्यक्षायमाणत्वं स्फुटतया पुरः स्फुरद्रूपत्वेनैव प्रतीतिर्भाविकम्। इह प्रत्यक्षेणैव अर्थः स्फुटतया प्रतीयतेऽनुमानशब्दादिभिस्त्वस्फुटतया। तत्र शब्दादपि सामग्रीवशेन पुनःस्फुरद्रूपतयैवावगतिर्भाविकम्। सा च सामग्री वस्तुनोऽत्यद्भुतत्वादि, पदानां झगित्यर्थसमर्पकत्वम्, वाक्यस्य च व्यवहितसम्बन्धादिविरहः, कवेश्च प्रयोजकार्थप्रतिपादननैपुण्यं इत्यद्भुतचिरपरिशीर्णितादे प्रसभं चेतसि प्रतिफलनं प्रतिफलितस्य च प्ररोहात्तदेकतानतया भावनावत्पुनः पुनश्रवणं तेन योगिनामिव भावनाबलेन विप्रकृष्टमपि वस्तु स्फुटतयैव भासते इत्यलं बहुना। स्फुटत्वस्य च प्रतीतिधर्मत्वादस्फुटस्य स्फुटत्वेन प्रतीतिविरहेणात्र भ्रान्तिमत्त्वसम्भावनाया अभाव इति अर्थस्य प्रतीत्यनुप्रवेशे संभावनोल्लासादुत्प्रेक्षा। इह तु वस्तुनः स्फुटत्वेनैव प्रतिभासः। न स्फुटतयैवाव गच्छामीति प्रतीतिरित्युत्प्रेक्षातः तस्य स्फुटमेव वैलक्षण्यम्। अस्य च देशेन कालेन स्वभावेन वा विप्रकृष्ट वस्तु विषयः कालविप्रकृष्टस्यापि भूतभावित्वेन द्विभेदतेति चत्वारो भेदाः। क्रमेण—

विसइ पडिपहपत्थिअजणविसरणिमिज्जमाणविच्छेअं।
णवहन्तरोम्मुहं (?) कहं वि गोहणं गामरच्छासु ॥ ५९४ ॥
[ विशति प्रतिपथप्रस्थितजनविसरनिर्मीयमाणविच्छेदम्।
निरन्तरोन्मुखं कथमपि गोधनं ग्रामरथ्यासु ॥ ]

अत्र बहुश एवंविधस्य गोधनप्रवेशस्यानुन्मीलितत्वेन चेतसः प्रतिफलनात्प्रत्यक्षायमाणत्वम्। यथा वा—

शृङ्गो तुरङ्गमदमत्तगभीरघोरभाङ्कारिशाङ्करवृषभ्रमणक्षणे यः।
उद्भिन्नभापुरनिरन्तरजातरूपसंभारतारकितसानुरुपैति लक्ष्मीम् ॥५९५॥

अत्र कैलासस्यैवंविधस्याद्भुतत्वेन प्रत्यक्षायमाणता। अनयोश्च देशविप्रकर्षः। "किं छत्रं किं नु रत्नम्" इत्यादि। अत्र भूतस्य वर्धमानस्य त्रिविक्रमवपुषोऽवस्थाश्चर्यकारितादिना प्रत्यक्षायमाणता। यथा च—

एन्ति गअणपेरन्तसु कहं वि उम्मुहसमीरहीरन्ता।
थोओप्पातणिविट्ठा सेलेसु विहंगसंगाआ॥ ५९६॥
[ आगच्छन्ति गगनपर्यन्तेषु कथमप्युन्मुखसमीरह्रियमाणाः।
स्तोकोत्पतितनिविष्टाः शैलेषु विहङ्गसङ्घाताः॥ ]

अत्र भूतस्य शैलावपतनविहङ्गोत्पतननिवेशादेः संभावनयोल्लिखितस्य स्फुटत्वेनावगतिः।

यस्मिन्पश्य कुलाचलप्रभृतयः सर्वे स्थिता अप्यमी
सम्प्रत्यस्थितकल्पतामुपगताः कालेन सोऽप्यम्बुधिः।
स्फूर्जद्द्वादशभानुभानुविगलत्पाथःप्रथस्सङ्कुचन्
मर्मोन्मानविलोलसंकुलमिलत्सन्धिस्थितिस्स्थास्यति॥ ५९७॥

अत्र भाविन्या अम्बुधिसम्बन्धिन्या अवस्थाया स्फुटत्वेन प्रतीति।

उत्कृत्योत्कृत्य कृत्तिं प्रथममथ पृथूच्छोफभूयांसि मांसा-
न्यंसस्फिक्पृष्ठपिण्डाद्यवयवसुलभान्युग्रगन्धीनि जग्ध्वा।
आत्तस्नाय्वन्त्रनेत्रः प्रकटितदशनः प्रेतरङ्कः करङ्का-
दङ्कस्थादस्थिसंस्थं स्थपुटगतमपि क्रव्यमव्यग्रमत्ति॥ ५९८॥

मा. मा. ५. १६

अत्र स्वभावविप्रकृष्टस्य प्रेतस्यावस्था साक्षात्कृता। अस्य च प्रायश स्वभावोक्तिसकीर्णत्वेऽपि न तदन्तर्भावः। सूक्ष्मवस्तुस्वभाववर्णनाभावेऽपि "किं रत्नम्" इत्यादौ विविक्तत्वेन दर्शनात्। नापि स्वभावोक्तिरस्मिन्नन्तर्भवति। क्वचित्सकीर्णत्वेऽपि प्रत्यक्षपरिदृश्यमानवस्तुगतसूक्ष्मस्वभाववर्णने तस्यास्ततो विविक्तविषयत्वसंभवात्।

सूक्ष्मस्वभावकथनेन विनापि साक्षा-
दर्थप्रतीतिरिह केवलभाविकाङ्गम्।
शुद्धस्समग्रजनतानुभवप्रसिद्ध-
सम्यक्स्वभावभणितौ तु भवेत्स्वभावः॥ ॥ १०७॥

## उदारचरिताङ्गत्वमुदात्तम् ॥ १०८ ॥

उदारचरितानां यत्र चरितं वस्त्वन्तराङ्गतामुपयाति तदुदात्तम्। यथा—

कश्चित्कान्ताविरहगुरुणा स्वाधिकारप्रमत्तः
शापेनास्तङ्गमितमहिमा वर्षभोग्येण भर्तुः ॥
यक्षश्चक्रे जनकतनयास्नानपुण्योदकेषु
स्निग्धच्छायातरुषु वसति रामगिर्याश्रमेषु ॥ ५९९ ॥

अत्र वाक्यार्थीभूतस्य देशविशेषस्य उदारचरितजानक्यादिचरितमङ्गतयोपनिबद्धम्। यथा वा—

अत्रासीत्फणिपाशबन्धनविधिः शक्त्या भवद्देवरे
गाढं वक्षसि ताडिते हनुमता द्रोणाद्रिरत्राहृतः।
दिव्यैरिन्द्रजिदत्र लक्ष्मणशरैर्लोकान्तरं प्रापित-
स्तस्याप्यत्र मृगाक्षि राक्षसपतेः कृत्ता च कण्ठाटवी ॥ ६०० ॥

अत्र इन्द्रजिदादीनां उदारचरितं वाक्यार्थीभूतदेशाङ्गत्वेनोपात्तम्।

मुक्ताः केलिविसूत्रहारगलिताः सम्मार्जनीभिः हृताः
प्रातः प्राङ्गणसीम्नि मन्थरचलद्बालाङ्घ्रिलाक्षारुणाः।
दूराद्दाडिमबीजशङ्कितधियः कर्षन्ति केलीशुका
यद्विद्वद्भवनेषु भोजनृपतेस्तत्त्यागलीलायितम् ॥ ६०१ ॥

इत्यादावसम्भवि प्रजापतिनिर्मितसमृद्धिवर्णनात्समृद्धिमद्वस्तुवर्ण(न)मुदात्तमित्युदात्तभेदो न वाच्यः। असम्बन्धे सम्बन्ध इत्येवंरूपाया अतिशयोक्तेः शुद्धविषयत्वात्। न च विरोधादिवदतिशयोक्तिमूलत्वेऽपि विच्छित्त्यन्तरसम्भवो येनालंकारान्तरता स्यात्। समृद्धिवर्णनविच्छित्तिसम्भावेनालंकारान्तरतायामिष्यमाणायामसंभाव्यमानासद्धिगेपादिवर्णनेऽप्यलंकारान्तरं प्रसजति।

योऽध्यवसायः शुद्धस्सातिशयोक्तिर्विशेषतो यत्र।
विच्छित्त्यन्तरयोगैरन्यालङ्कारविषयोऽसौ ॥इति विवेकः॥१०८॥

## रसभावतदाभासानां रसाद्यङ्गत्वे रसवत्प्रेयऊर्जस्वीनि ॥१०९॥

इह शब्दार्थौ काव्यम्। शब्दश्च वाचकलाक्षणिकव्यञ्जकत्वेन त्रिभेदोऽपि तच्छरीरैकदेशभूत. वाच्यलक्ष्यार्थसामर्थ्यलभ्यव्यङ्ग्यतयार्थश्चतुर्भेदः। अर्थसामर्थ्यलभ्यार्थो यथा तुल्ययोगितादावौपम्यादि। तत्रार्थस्त्रिभेदः काव्यशरीरावयवः शब्दार्थशरीरत्वात्तस्य। व्यङ्ग्यस्तु रसादि। काव्यजीवितहेतुभूतत्वेन तस्याङ्गित्वम्। तद्गताश्चौजःप्रसादादयो गुणाः। तस्यात्मभूतस्य रसादेरुपस्कारकत्वेन गता अलंकाराः। अर्थमुखेनार्थालंकाराः। एवं च प्राधान्येन व्यङ्ग्यरसादेस्स्थितिस्तत्र रसादिध्वनि। रसानां रसादीन्प्रति अङ्गत्वे रसवदलंकारः। भावस्य देवविषयस्य रत्यादेस्स्थायिन· प्राधान्ये भावध्वनि, रसाद्यङ्गत्वे तु प्रेयोलंकारः। अनौचित्यप्रवृत्तत्वे रत्यादे रसाभासभावाभासयोः प्रधानत्वे ध्वनिः अङ्गत्वे पुनरूर्जस्व्यलंकारः। व्यभिचारिभूतस्य निर्वेदादेर्भावस्य गर्भदासवत्कदाचिदपि स्वप्राधान्याभावात् सर्वदा रसाद्यलंकारत्वेऽभिधीयमाने भावस्थित्युदयसन्धिशबलताप्रशमाख्यानां ध्वनिभेदानामभावः प्रसज्यते। न तेषां भावस्थित्युदयादीनां ध्वनित्वमेव। तस्माद् व्यभिचारिभावापेक्षया प्रेयऊर्जस्विसमाहितभावोदयसन्धिशबलत्वानि न पृथगलंकाराणि। यदप्युक्तं यत्र वाक्यार्थीभूतानां रसादीनामुपस्कारका निर्वेदादयस्तत्र प्रेयःप्रभृतयोऽलंकाराः, यत्र तु रसाद्युपसर्जनीभूतानामपि भावस्थित्यादीनां वाक्यतात्पर्येण राजानुगतविवाहप्रवृत्तभृत्यवत्प्राधान्य तत्र भावादिध्वनिरिति तदसत्। विषमोपन्यासात्। तथा हि विवाहसमये निजप्रयोजनसंपादनार्थं प्रवृत्तस्य भृत्यस्य न राजानं प्रति गुणत्वं तदीयानां तदीयकार्यकरणात्। प्रत्युत राजैव विवाहशोभोद्भलकतया तं प्रति गुणीभूतः। इह तु वाक्यतात्पर्यविषयत्वेन प्राधान्येऽपि भावस्थित्यादे रसादिपरिपोषकत्वात्यागान्निजप्रयोजनान्तरसम्पादकत्वविरहाच्च न रसाद्यपेक्षया प्राधान्य यथा च समासोक्त्यप्रस्तुतप्रशंसादावलंकारान्तराणां शाब्देन वृत्तेन वाक्यार्थीभूतानां प्राधान्येऽप्यर्थावसेयसमासोक्त्याद्यपेक्षयाङ्गत्वमेव एवमिह भावस्थित्यादावपि मन्तव्यम्। अथ प्रधानभूतरसाद्यङ्गत्वे भावस्थित्यादिध्वनि, अन्याङ्गभूतरसादिपरिपोषकत्वे प्रेयःप्रमुखा अलंकारा इति चेत् न। रसादेरेव हि प्रधानेतरभावे विशेष· न तदुपकरणीभूतस्य भावादेः। न ह्यन्योपसर्जनं स्वतन्त्रं वा स्वामिनं प्रति पारतन्त्र्ये गर्भदासस्य

विशेषः कश्चित्। ततश्च रसादीन्प्रति रसादीनामङ्गत्वे रसवदादयोऽलंकाराः। अन्यत्र रसादिध्वनिरिति स्थिते वाच्यमानं प्रत्युदारचरितस्याङ्गभावः उदात्तालंकार इति सिद्धो विषयभेदः।

रसादिगुणभूतयोरिव च वस्त्वलंकारयो-
र्यथा ध्वनिरुपेयते न तु कदाप्यलंकारता।
तथैव परिगृह्यतामिह च भावशान्त्यादिषु
स्फुटा तदवधार्यतामिति रसादिभेदस्थितिः॥

प्रधानतां यत्र रसादयो गता रसो रसादिध्वनिगोचरो भवेत्।
भवन्ति ते यत्र रसादिपोषका रसाद्यलंकारदशा हि सा पृथक्॥

निर्वेदादीनां सर्वदैवाङ्गभावात्प्रेयोलंकारः तद्व्यपेक्षो न वाच्यः।
तस्मादेतेषां व्यङ्ग्यतायां ध्वनित्वं न प्राधान्यं क्वापि यस्माद्व्रजन्ते॥

एतेन भावप्रशमादयोऽपि व्यङ्ग्यास्सदैव ध्वनितां प्रयान्ति।
ध्वनित्वमिष्टं यदि तेषु तर्हि न लक्षणीयस्तु समाहितादिः॥

रसादेरङ्गित्वे ध्वनिरथ रसादीन्प्रति यदि
गुणत्वं तर्हि स्याद्रसवदनुगतोऽलंकृतिगणः।
गुणत्वं वाच्येऽर्थे व्रजति यदि चोदारचरितं
तदोदात्तं भावस्थितिशबलतादौ ध्वनिरिति॥ निर्णयः।

संकेओसुअमणओ गहवइधूआकडक्खसच्चविओ।
ता......ण चेअइ गोउरअम्बरं धोइ॥६०२॥
[ संकेतोत्सुकमना गृहपतिदुहितृकटाक्षावलोकितः।
ता......गतो न चेतयते गोपुराम्बरं दोग्धि॥ ]

अत्र गोपालस्य धेनुगमनेऽप्यम्बरदोहनेनोपहसनीयत्वस्य वाक्यार्थीभूतत्वाद् वाच्यस्य प्रथमार्धोपनिबद्धः शृङ्गारोऽङ्गम्।

दाव रुदिअं जाव...दावक्खीणो जाव खिज्जइ णआङ्गी ।
दाव णिछसिअं वराइएँ जावोच्छसिआ समप्पन्ति ॥ ६०३ ॥
[ तावद्रुदितं याव .....तावत्क्षीणो यावत्क्षीयते नताङ्गी ।
तावन्निश्वसितं वराक्याः यावच्छ्वासाः समाप्यन्ते ॥ ]

अत्र वाच्यस्य "तावद्रुदितं" इत्यादिमुखेनोपनिबद्धस्य विप्रलम्भस्य यावत्सर्वैरेवारुद्यत इत्यादिनाक्षिप्तः करुणोऽङ्गम् ।

क्रन्दं क्रन्दं करुणकरुणं क्रन्दति स्रस्तकेशो
लावं लावं रणितवलयं हारवल्ली लुनाति ।
श्वासं श्वासं श्वसिति विततं ताडयत्यङ्गमङ्गं
पातं पातं पतति नृपते सुष्ठु कान्ताजनस्ते ॥ ६०४ ॥

अत्र नृपतिविषयस्य रतिभावस्य करुणोऽङ्गतयोपनिबद्धः ।

अत्युच्चाः परितः स्फुरन्ति गिरयः स्फारास्तथाम्भोधय-
स्तानेतानपि बिभ्रती किमपि न क्लान्तासि तुभ्यं नमः ।
आश्चर्येण मुहुर्मुहुः स्तुतिमिति प्रस्तौमि यावद्भुव-
स्तावद् बिभ्रदिमां स्मृतस्तव भुजो वाचस्ततो मुद्रिताः ॥६०५॥

अत्र नृपतिविषयाया रतेर्भूमिविषयो भावोऽङ्गम् । यथा वा—

कण्ठकोणविनिविष्टमीश ते कालकूटमपि मे महामृतम् ।
अप्युपात्तममृतं भवद्वपुर्भेदवृत्ति यदि रोचते न मे ॥ ६०६ ॥

अत्रेशविषयभावं प्रति कालकूटविषयो भावोऽङ्गतयोपनिबद्धः ।

बन्दीकृत्य नृपद्विषां मृगदृशस्ताः पश्यतां प्रेयसां
श्लिष्यन्ति प्रणमन्ति लान्ति परितश्चुम्बन्ति ते सैनिकाः ।
अस्माकं सुकृतैर्दृशोर्निपतितोऽस्यौचित्यवारांनिधे
विध्वस्ता विपदोऽखिलास्तदिति तैः प्रत्यर्थिभिः स्तूयसे ॥ ६०७ ॥

अत्र नृपतिविषयं भावं प्रति प्रथमार्धोपनिबद्धो रसाभासो द्वितीयार्धगतो भावाभासोऽङ्गत्वेनोपात्त इत्यूर्जस्व्यलंकारः ॥ १०९ ॥

## एतेऽङ्गित्वेऽलङ्काराः ॥ ११० ॥

एते पूर्वलक्षितास्सर्वालंकारा अङ्गिनोऽलंकारान्तरत्वमप्राप्ताः अपि तु तैरङ्गभूतैरुपस्क्रियमाणा निजनिजव्यपदेशभाजो भवन्ति । अन्याङ्गभावमुपगतास्तु वक्ष्यमाणसंकरालंकारान्तरव्यपदेशो भजन्ते । न त्वलंकारान्तरविविक्ततया केवलत्वेन स्थिता निजव्यपदेशमर्हन्तीति वाच्यम् । वाच्येनार्थेनार्थसामर्थ्यलभ्येन व्यङ्ग्येनालंकारान्तरेणासंकीर्णत्वासंभवेन शुद्धत्वाभावात् । भावे वा चारुतातिशयविरहः काव्यपदेशानर्हत्वम् । अर्हत्वे वा प्रविरलविषयप्रसङ्गात् । एवं च प्रधानत्वावस्थितत्वेन निजनिजालंकारव्यपदेशार्हत्वे पूर्वत्र क्वापि क्वापि लक्षणोदाहरणेषु तस्य तस्यालंकारस्य यद्यप्यन्याङ्गतास्त्येव तथापि संभवमात्रेण निदर्शनं कृतं न तु तत्र तस्यालंकारत्वेन, प्राधान्यभावात् । तथाविधस्य लक्ष्यादभ्यूहस्तत्र तत्र कार्यः । यद्यपि च तत्र तत्रोक्तालंकारव्यतिरिक्तविच्छित्तिप्रतिभासोऽस्ति तथाप्युक्तालंकाराणां छायासंकरेण भङ्ग्यन्तराभिधानेन वा विच्छित्यन्तरप्रतिभास आमुखे विवेकोत्तरकालं तु तद्रूपतयैव निश्चय इत्युक्तमेतेऽलंकारा इत्यलंकारान्तरबुद्धिर्न कार्येत्यर्थः ।तत्र च्छायासंकरो यथा–

यन्न्यस्यति स्म स्मयवत्यशोके पदे रणन्नूपुरमायताक्षी ।
स्वैरं स चक्रे तत एव मूर्ध्नि पदं वलाशेषमहीरुहाणाम् ॥ ६०८ ॥

अत्र पदकरणादनुरूपस्याशोककर्तृकस्य तरुषु पादकरणस्य कार्यस्योत्पादास्समच्छाया, तथा पादाघातस्य तिरस्कारहेतुत्वेनानर्थपदे सर्वतरूणां मूर्ध्नि पदकरणेन महत्वोत्पत्तिरूपस्यार्थस्येति विषमच्छायापीति न विच्छित्त्यन्तरम् । यथा वा—

कादूण हिरण्णक्खं पढमजमदसणगोअरं जेण ।
णीआ णिअदंसणपहं वसुहा तं सोअरं णमह ॥ ६०९ ॥
[ कृत्वा हिरण्याक्षं प्रथमयमदर्शनगोचरं येन ।
नीता निजदर्शनपथं वसुधा तं सूकरं नमत ॥ ]

अत्र हिरण्याक्षस्य यमदर्शनगोचरत्वानयनात्कारणात् सदृशस्य वसुधादर्शनपथस्योत्पत्तिप्रतीतेस्समच्छायाया विनश्यदवस्थाया वसुधायास्सामर्थ्या-

यमगोचर गताया हिरण्याक्षदानेन स्वीकार इत्यर्थतोऽवसेयां परिवृत्तिच्छायां प्रत्यङ्गता । यथा वा—

येनैव देवी नयनद्वयेन सा राजमार्गं कलयांबभूव ।
तेनैव वातायनतां गतेन ददर्श हर्षाकुलितः स्मरोऽपि ॥६१०॥

अत्र देव्या राजमार्गदर्शनोपायभूतस्य नयनद्वयस्य स्मरेणाप्युपजीवनाऽप्रसङ्गस्य देव्याश्चौत्सुक्यादिना राजमार्गदर्शनं स्मरस्य तु नयनवातायननिवासादिना निमित्तान्तरेणेति हेत्वन्तरेणान्यस्य स्मरस्यापि तथात्वमित्यनुक्तेश्च छायासंकीर्णता । भङ्ग्यन्तरेणाभिधानाद्यथा—

बिम्बोष्ठं बहु मनुते तुरङ्गवक्त्रश्चुम्बन्तं मुखमिह किन्नरं प्रियायाः ।
श्लिष्यन्त मुहुरितरोऽपि तं निजस्त्रीमुत्तुङ्गस्तनभरभङ्गभीरुमध्याम्॥६११
शि. ४. ३८

अत्र तुरङ्गवक्त्रस्य चुम्बने आनुगुण्याभावान्न वक्त्रस्य(?) चालिङ्गनमित्यसाकल्यरूपविषमोपस्कृतस्सर्वप्रकारेणानुगुण्याभाव उभयत्रापीति तुल्यार्थान्तरबहुमानमुखेन स्थितानादरोपनिबन्धाद्भङ्ग्यन्तरेणादरः । यथा च—

दिवमधिरोहति धरणी तारानिकरोऽपि लुठति धरणितले ।
न तु तव चरणस्मरणं मोघममोघस्मृतेर्भवति ॥ ६१२ ॥

अत्र धरण्या अन्तरिक्षप्राप्तिस्तारकाणां च धरणितलप्राप्तिस्सम्भाव्यास्याश्चरणतलमोघफलत्वस्यासंभाव्यतरोपनिबन्धाद् व्यतिरेकस्य निमित्तानुपादानादिना भङ्ग्यन्तरेणाभिधानम् । अनया दिशा स्वयमेवान्यत्र विवेचनीयम् । अत्र चालंकारसमाख्ययालंकारापेक्षयाङ्गित्वं न रसाद्यपेक्षया तथात्वासंभवात् । अलंकारापेक्षया तु सर्वदाङ्गतयालंकारत्वम् । तेनालंकार्यसद्भावेऽनुप्रासोपमादेरलंकारव्यपदेशः । तदभावे तु शब्दार्थचित्रता । तेन यदुक्तमनुप्रासोपमादयोऽलंकाराश्चित्रमिति तदयुक्तम् । चित्रत्वेऽलंकारत्वाभावादलंकारसम्भावनिबन्धनेऽलंकारत्वे चित्रत्वानुपपत्तेः । तत्स्थितमेतदलंकार्याभावे चित्रत्वमन्यत्र त्वलंकारव्यपदेश एवेति ।

इह मुख्यरसादिसम्भवे स्यादुपमादौ नियमादलंकृतीत्वम् ।
रसभावविवर्जितस्य चित्रव्यपदेशो न पुनस्तदन्तिकेऽपि ॥

इति संक्षेपः ॥ ११० ॥

## न संसृष्टिः पूर्वहानाच्चारुत्वाभावाच्च ॥ १११ ॥

सर्वेषामलंकाराणामन्योन्योपसर्जनतामप्राप्तानामेकत्र संसर्गस्संसृष्टिः यदुक्तमेषां तिलतण्डुलन्यायेन मिश्रत्वं संसृष्टिरिति । सा संसृष्टिर्नालंकारान्तरम्। पूर्वेषां सर्वेषामलंकाराणामभावप्रसङ्गात् । शब्दार्थालंकाराणां हि प्रायशो व्यस्तसमस्तत्वेन स्थितिस्तत्र संसृष्टेरलंकाराभ्युपगमेऽनुप्रासोपमादीनां विषयापहारो भवेत् । शुद्धानामनुप्रासोपमादित्वं मिश्रत्वे तु संसृष्टिरितिचेदन्ततो वृत्त्यनुप्रासेनातिशयोक्त्या स्वभावोक्त्या प्रतिभया पर्यायोक्तेन वा भंग्यन्तराभिधानरूपेण भवदभ्युपगतेन विशेषणभूतेन हेत्वलंकारेण प्राधान्ये रसादीनां रसवदाद्यलंकारैर्वावश्यभाविनि संसर्गे शुद्धत्वाभावात् । भावे वा रसादिवर्जनेन काव्यत्वाभावात्। यत्रापि च निपुणमन्यैरलंकारशून्यता तत्र तत्र विहिता तत्राप्यवधानधनप्रधानधिषणैरनेकालंकारसम्भवो वाच्यादिभेदेन प्रतिपाद्यत एव। तथा हि—

कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम् ।
यत्र स्रुतक्षीरतया समीरः सानूनि गन्धैः सुरभीकरोति ॥६१३॥
कु. १. ९

अत्र कपोलकण्डूनिवारणार्थं सरलघट्टनात्मकात्प्रवर्तितात्प्रयत्नात्सम्भाविताधिकस्य सानुसुरभित्वस्य पारंपर्येणोत्पत्तिरिति विशेषच्छायाया वाक्यार्थीभूतायाः स्फुटैव स्वभावोक्तिरङ्गम्। सुरभिसमीरणसंसर्गात्सानूनां सुरभित्वमिति तद्गुणच्छायापि। स्रुतक्षीरतायाश्च विघट्टितानामिति विशेषणद्वारेण पदार्थो हेतुरिति त्वन्मतेन हेत्वलंकारोऽपि । सरलद्रुमभङ्गाख्यदोषोत्पत्तेस्सानुसुरभीकरणस्य गुणोस्योत्पादनेन समाधानात्समतापि । तत्कथमत्रालंकारो न कश्चिदित्युक्तम्। यथा च—

निर्लोठ्यमानो मठपीठिकासु विप्राग्रहारेषु निगृह्यमाणः ।
यन्त्रार्प्यमाणस्सुरसुन्दरीषु हा कष्टमित्येव कलिर्विरौति ॥६१४॥

अत्र कलिसम्बन्धिनः प्रसराभावस्य निर्लोठ्यमानादिरूपतयाध्यवसानाद्धाकष्टविरावासम्बन्धेऽपि सम्बन्धाच्चातिशयोक्तिः, अन्योऽपि दुर्गतादिर्मठादिषु हठेन प्रविविक्षुर्निर्लोठनादिना हा कष्टं विरौतीति कलेस्तद्धर्मावच्छेदात्समासोक्तेरङ्गम्। यथा—

शार्ङ्गं तुरङ्गं चतुरङ्गसैन्यं बाह्वोर्बलं वीरव्रतं च ।
स म्लेच्छराजोऽपि गलन्महेच्छो निनिन्द यत्रैव हि मन्दभाग्यः॥६१५॥

अत्र स इति यः सर्वत्राप्रतिहतशक्तित्वेन साहंकारो म्लेच्छराजः गलन्महेच्छ इति धर्मधर्मिणोर्विरूपयोरसंघटनाद्विषमः, शार्ङ्गतुरङ्गादिकारणसामग्र्येऽप्यवस्कन्दनादेः कार्यस्यानुत्पादनाद्विशेषोक्तिच्छायापि, तथा म्लेच्छराजोऽपीति अधिकादन्येषां राज्ञामसामर्थ्यावगतिरित्यर्थापत्तिः, निन्दाख्यधर्मसक्तिर्देशाच्छाङ्गादीनां प्रकृतानां वर्ण्यमानदेशाभिप्रायेणाप्रकृतानां वा तुल्ययोगिता, यत्रैवेत्युक्त्वा तादृशातुरुष्कावस्कन्देऽपि व्याकुलतानुत्पत्तेः देशान्तरं तत्समं नास्तीत्यार्थोऽसमालंकारश्च । यथा च—

स्वप्नेऽपि कार्यव्यसनान्निवृत्तिः स्वधर्मचर्यापरिपालनं च ।
एतावता केवलमेव यस्य जनस्समग्रोऽपि नियन्त्रितोऽभूत्॥६१६॥

अत्र स्वप्नेऽपीत्युक्त्या जागरणदशायामर्थात्तथात्वमित्यर्थापत्तिः । एतावता केवलमित्यत्र नियन्त्रणानिवृत्तितात्पर्येण व्यसननिवृत्त्यादेर्ज्ञातस्य ज्ञापनात्परिसंख्या च । यथा च—

उद्रिक्तवैदेशिकवादिवृन्दमदोदयं यत्र दरिद्रयन्ति ।
संपर्कतस्तार्किकपुङ्गवानां ते तेऽपि लीलाशुकशारिकाद्याः ॥६१७॥

अत्र शुकशारिकाणां तार्किकसंपर्कात्परवादिदलनाख्यस्य धर्मस्योत्पत्तेः तद्गुणः शुकशारिका अपीत्यर्थापत्तेरक्रम् । इत्थमेवमादौ नामलंकारता । क्वचित्तु स्फुटानेकालंकारसम्भवेऽपि नियतप्रदर्शनं कृतम् । यथा वा

प्राणेशो रिपुसम्पदामपि जगद्वीरव्रतश्रोत्रियो
निश्शङ्कं सुखसंप्रसुप्तमुदिताशेषप्रजायासिकः ।
प्रेमासक्तविलासपूततरुणीनेत्रोत्पलाभ्यर्चित-
स्त्यागौचित्यविवेकसत्यसुकृतैर्योऽभूत् कुटुम्बीकृतः ॥ ६१८ ॥

अत्र परयोषितां प्राणेशः कथं श्रोत्रियो भवतीति तथायासिकस्यापि सतोऽर्चनीयता सततमपि परोपजीवकत्वेन तुच्छस्यापि महद्भिराश्रयणीयत्वमिति च विरोधो न प्रदर्शितः । यथा वा—

देवः पुरः पतितमेष कृपानुरोधाद्दृष्टापराधमपि रक्षति निर्विकारः।
किन्त्वस्य चण्डमरिषण्डमकाण्ड एव तीव्रप्रतापदहनस्तृणवत्तृणेढि॥६१९

अत्र दृष्टापराधस्य पुरः पतितस्यापि रक्षणमिति विशेषोक्तिः, किन्त्वस्येत्यनेन निर्विकारत्वादेः प्रतिपक्षतया तीव्राद्यनुनिर्देशाच्छाब्दवैधर्म्यम्, क्षमादियुक्तान्नृपतिरूपात् कारणादुत्पन्नस्य क्रूरतायुक्तस्य विरूपस्य प्रतापस्य प्रतीतेर्विषमालंकारस्य व्यंग्यस्याङ्गम्। अन्यत्तु ग्रन्थगौरवभयान्न प्रदर्शितमिति तत्र तत्र तज्ज्ञैः स्वयमेवाभ्यूह्यम्। एवं चालंकारशून्यतायामसंकीर्णालंकारत्वस्य चासंभवात् संसृष्टिसंकरावेव द्वावलंकारौ लक्षणीयतया प्राप्तौ तद्भेदतयानुप्रासोपमादयो न तु स्वातन्त्र्येणालंकारतयेति। यदि च यथाकथंचिदलंकारान्तरविविक्तमुदाहरणं क्रियते प्रदर्श्यते वा तत्रापि भवतां कथं समाश्वासः। अन्येनाप्यलंकारान्तरप्रदर्शनसंभवादसंभवे वा तत्र काव्यव्यपदेशं लभते। कष्टकल्पनया प्रवृत्तस्य चारुत्वायोगाद्युक्तत्वे वा प्रविरलविषयत्वमुपमादीनां स्यादिति। एतच्च भवद्भिः स्वयमेव "रसादिरूपस्तु व्यङ्ग्योऽर्थोऽलंकारान्तरं च सर्वत्राव्यभिचारीत्यगणयित्वैवालंकारा उदाहृताः। तद्रहितत्वेन तूदाह्रियमाणा विरसत्वमावहन्ति" इत्यादिना ग्रन्थेन कथितम्। तेन भवदुदाहृतानामेवानुप्रासोपमादीनां विविक्तत्वासंभवादुपमादिव्यपदेशानुपपत्तौ संसृष्टिसंकरोदाहरणे तवैव भवेदिति। किं च न संसृष्टिवशेन कश्चिच्चारुतातिशयः प्रतिभासते येनालंकारान्तरं कथ्यते। ननु मौक्तिकपद्मरागेन्द्रनीलादीनां संसर्गे लब्धपरभागतया भासत एव चारुत्वान्तरम्। तद्वदिहापि स्यादिति चेत् न अनुप्रासादिना उपमादिना तस्य वा ते सचेतसः कस्यचिन्न हि परभागोऽवभासते भिन्नजातीयत्वात्। समानजातीयानां ह्यनुकूलतयान्यथा वानुगतबुद्धिवशेन परभागो जायते न तु शब्दार्थयोर्भिन्नेन्द्रियग्राह्यत्वात्। शब्दार्थालंकारसंसर्गे चारुतातिशयस्यास्माभिस्संवेदनान्नेदमिति चेत् न शपथप्रत्येयत्वात्। किं च

दग्धान्धगन्धगजकुम्भकवाटकूट-
संक्रान्तनिघ्नघनशोणितशोणशोचिः।
वीरैर्व्यलोकि युधि कोपकषायकान्तिः
कालीकटाक्ष इव यस्य करे कृपाणः॥ ६२०॥

तथा "एष त्वदाननरुचा" इत्येवमादौ सुस्पष्टेऽप्युत्प्रेक्षाविषये यैरुपमाभिहिता तेषां भवतामेवमादावत्यन्तातीन्द्रियार्थदर्शनाय केन योगीश्वरेण चक्षुरर्पितमिति न जानीमः । लिम्पतीत्यादावुपमोत्प्रेक्षादीनां सजातीयत्वेन युक्तः परभागप्रतिभास इति चेत्, नैवम् । न हि परभागावभासोऽलंकारत्वप्रयोजकः । सुकुमारासुकुमारवर्णसंसर्गेऽन्यालंकारत्वप्रसंगात् । प्रत्युत लिम्पतीत्यादौ मतिमद्भिः प्रक्रमभेदाख्यो दोषोऽभिहितः । न चेदेष एवमेव सर्वकाव्यस्योपलम्भात् गुणस्तु कुत । न हि सचेतसामेकस्मिन् विषये किमयं दोषः किं वा गुण इति किं सितमसितं वेति यद्भवति विप्रतिपत्ति. । मौक्तिकादिवत्परस्परं शोभातिशयहेतुत्वे चाङ्गाङ्गिसंकर एव स्यान्न संसृष्टिः । उक्तं चैतदेवमादौ संकर एव । तथा हि न तावदयश्शलाकाकल्पा अलंकारा एकस्मिन्वाक्ये भवन्ति । दशदाडिमादिवाक्यवदसंबन्धप्रलापितापत्तेः । सम्बन्धश्चाभ्युपगम्यमानो गुणप्रधानभावेनाभ्युपगन्तव्यः । द्वयोः प्रधानयोरप्रधानयोः सम्बन्धासंभवात् गुणप्रधानभावेन चालंकाराणां सम्बन्धेऽङ्गाङ्गिभावापत्त्या संकर एव स्यात् । तथा च—

देवि क्षपा गलति चक्षुरमन्दतार-
मुन्मीलयाशु नलिनीव सभृङ्गमब्जम् ।
एष त्वदाननरुचेव विलज्जमानः
पश्याम्बरं त्यजति निष्प्रतिभः शशाङ्कः ॥ ६२१ ॥

इत्यत्रोपमालिङ्गितस्य चक्षुरुन्मीलनस्य वाक्यार्थीभूतस्य हेतुत्वेनोपात्तक्षपागलनोपपादकत्वेनोपनिबद्ध उत्प्रेक्षाश्लिष्टः शशाङ्काम्बरत्याग इत्युत्प्रेक्षायाः पारम्पर्येणोपमापोषकत्वेन तदङ्गता, उपमा त्वर्थान्तराङ्गत्वागमनादपरिम्लाना वाक्यार्थतामुपगतेति संकर एव न तु संसृष्टिः । एवं लिम्पतीत्यादौ उत्प्रेक्षाद्वयमसत्पुरुषसेवेव दृष्टिर्निष्फलतां गतेत्युपमाया वाक्यार्थीभूताया हेतुत्वेन गतमित्यङ्गत्वेन संकर एव । एवमुदाहरणान्तरेषु विवेच्यम् । परं प्रत्युपसर्जनीभूतयोस्त्वलंकारयोरवान्तरसम्बन्धाभावेन संकरो न संसृष्टिर्नं-चालंकारः कश्चित् ।

अन्योन्यसम्बन्धविवर्जितानामलंकृतीनां विनिवेशनं चेत् ।
अनन्वितत्वाद्दशदाडिमादिवाक्यादिवद्दूषणमेव तर्हि ॥
अथान्वयोऽस्त्वेव परस्परं तद्गुणप्रधानत्वमवश्यमेष्यम् ।
तदा न संसृष्टिकथा गुणस्य पराङ्गतायां खलु संकरः स्यात् ॥
एकत्र चेदङ्गिनिसङ्गतं स्याद्द्वयं तदन्योन्यसमीलनेन ।
न सङ्करोऽन्यापि न वा गुणत्वं कार्यान्तरोत्पादनशक्तिभङ्गात् ॥

इति संग्रहः । यदि चायमलंकारः प्रधानमलंकारान्तरं प्रत्यङ्गभूतस्तदास्त्येव सम्बन्धस्तदापि चादेस्समुच्चयप्रतिपादकस्यानुपादानादलंकारसमुच्चय आर्थो भवेन्न तु संसृष्टिः ॥ १११ ॥

## अङ्गत्वे तु सङ्करः ॥ ११२ ॥

प्राधान्ये पूर्वेषामलंकाराणां यथोक्तमलंकारत्वम् । प्राधान्यं चान्येनोपस्कार्यता वाक्यार्थीभावेन बलवत्त्वं च । एतद्विपर्ययोऽन्यालंकारोपस्कारकत्वेनाङ्गता दुर्बलत्वं च संकरालंकार । एकाभिधानानुप्रवेशलक्षणस्तु संकरो नास्माभिरिष्टः । उपकार्योपकारकत्वं ह्यंगताख्यो हि संकरः । एकाभिधानानुप्रविष्टयोरपि स्वरूपपर्यवसितत्वे संसृष्टिवत्पृथगलंकारान्तरत्वमेव । एवं सत्यङ्गाङ्गित्वे तु संकर इति लक्षणं न कार्यम् । अङ्गत्ववदङ्गित्वेऽपि संकराभ्युपगम उपमाद्यलंकाराणामुक्तेन न्यायेन विषयाभावप्रसङ्गात् । तेन प्रधानतायां उपमादीनां निजं निजं नाम अङ्गत्वे पुनरेषां सङ्करधीनांङ्गिभावेऽपि । ननु च—

त्वद्वक्त्रचन्द्रे नवयौवनेन श्मश्रुच्छलादुल्लिखितश्चकास्ति ।
उद्दामरामादृढमानमुद्राविद्राविणो मन्त्र इव स्मरस्य ॥ ६२२ ॥

तथा—

यः कौमारहरः स एव हि वरस्ताश्चैव चैत्रक्षपा-
स्ते चोन्मीलितमालतीसुरभयः प्रौढाः कदम्बानिलाः ।
सा चैवास्मि तथापि चौर्यसुरतव्यापारलीलाविधौ
रेवारोधसि वेतसीतरुतले चेतस्समुत्कण्ठते ॥ ६२३ ॥

इत्यादावुपमारूपकयोस्तथा विभावनाविशेषोक्त्योश्चैकस्यापि साधकबाधकप्रमाणाभावादनिश्चयेन सन्देहरूपोऽपि संकरोऽस्त्येवेति स कथं न लक्षितः। तथा ह्याद्योदाहरणे किं वक्त्रचन्द्र इवेत्युपमासमासे किं वा वक्त्रमेव चन्द्र इति रूपकसमासे उपमितं व्याघ्रादिभिः सामान्याप्रयोगे मयूरव्यंसकादयश्चेत्युभयथापि लक्षणसंभवेन साधकबाधकप्रमाणाभावात् सन्देहः। उत्तरत्र चोत्कण्ठात्मकस्य कौमारहरसन्निधानादिलक्षणकारणसद्भावेऽप्यनुत्कंठावपुषः कार्यस्यानुत्पत्त्या विशेषोक्तिः। कारणस्य कार्यस्य वा साक्षादभावस्यानभिधाने विरुद्धमुखेनोपनिबन्धात्साधकबाधकाभावात् सन्देहः। तस्मात्सन्देहेनापि संकरो वक्तव्यः। संदेहायोगात्। तथा हि स्थाणुर्वा पुरुषो वेति सन्देहः कस्यचित् करचरणादिदर्शनेन जातस्तद्दर्शनेन निवर्तते न तु सर्वेषां सर्वदा वा। निकटस्थितैस्तदैवोत्तरकालं त्वन्यैरपि निश्चयनात्। अलंकारलक्षणं च सर्वदा सर्वत्र सर्वान् प्रतिपत्तॄन् प्रति प्रणीयते। न च सन्देहस्योक्तनीत्या तथात्वसंभवो नियतदेशकालप्रमातृगतत्वात् कतिपयप्रमात्रुद्देशेन च नालंकारप्रणयनं युक्तम्। न हि सम्भवति स एव सन्निकृष्टं प्रत्यलंकारोऽन्यं प्रति नेति। न चालंकारसन्देहः सर्वप्रमातृगत एवेत्यत्र प्रमाणमस्ति। अद्यापि कस्यापि निश्चयानुत्पादात् सम्भाव्यमिति चेत् न अन्यत्र सर्वसन्देहानां नियतत्वदर्शनेन तर्कान्तरेण बाधनात्। अशेषदेशाधिगतत्वेन सन्देहाभ्युपगमे वस्तुनोद्व्यात्मकतोररीकृता स्यात्। न च तथा युक्तम्। तन्न सन्देहसंकरः। यत्तु निशि तमन्योन्यः प्रलाप(?) न सन्देहसंकरः पृथगलंकारः सन्देहालंकारान्तर्भावात्। न हि वदनसुधाकरादिकयोरर्थयोरुपमारूपकादिकयोरलंकारयोर्वा संदेहो भिद्यते। तेनार्थसन्देहवदलंकारसन्देहोऽपि सन्देहालंकार एवेत्यादि तन्न्यायप्रतीतिबाह्यत्वादवधीरणीयमेव। तथाहि—

निजप्रतीतिं सन्देहरूपां वक्ता परामृशन्।
वाक्येनोपनिबध्नाति यत्र सन्देह उच्यते॥
कविनोपनिबद्धस्य नालंकारस्य निश्चयः।
श्रोतॄणां कल्पते यत्र स तु सन्देहसंकरः॥

तेन सन्देहादपि निबद्धरूपादुपनिबद्धालंकारसन्देहोऽन्य एवेति नास्य तदन्तर्भावशङ्कापि सम्भवति। ननु प्रदर्शितोदाहरणादौ तत्रापि निश्चया-

नुत्पादात्सन्देहोऽभ्युपगन्तव्यः। न ममानिश्चयेऽपि सर्वेषामनिश्चयानिश्चयात्। न चानिश्चय एव। तथा च त्वद्वक्त्रचन्द्र इत्यादावुभयथा समाससम्भवेऽपि न सन्देहः। यथा ह्यनेकार्थत्वेऽपि गवादिशब्दानां गामानयेत्यादौ प्रकरणादिवशेन निश्चय एव तद्वदत्रापि शब्दशक्तिपर्यालोचनेन स एव युक्तः। तथा हि उत्सर्गस्तावदयं यदभिधापरपर्यायया श्रुत्या शब्दाः प्रत्यायका इति। गत्यन्तराभावात्तु तदभावे लक्षणाश्रयणम्। तत्रोपमासमासे श्रुतिः। लक्षणा तु रूपकसमासे। श्रुतिलक्षणाविषये च श्रुतिर्ज्यायसीत्युपमासाधकसद्भावात्कथं मुख्यार्थबाधकहेतुकलक्षणाश्रयणम्। अबाधेन गतौ सम्भवन्त्यां बाधगतिरप्रामाणिकेति न्यायात्। मुखं चन्द्र इत्यादौ सामानाधिकरण्याश्रयेण गत्यन्तराभावे लक्षणात्मकरूपकावलम्बनम्। न वाच्यं वेदादौ शब्दैकगम्येऽर्थेऽयं नियमो न तु काव्यादौ पुरुषेच्छानिबन्धनव्यवस्थितौ। प्रत्युतोपमाया रूपकं चारुतातिशयवदिति कथं तत्परित्याग इति स्वाशयस्यैवावधारणात्। एवमपि रूपकस्यैव युक्तत्वेन सन्देहापोहात्। न च प्रयोजनानुसारि वस्तु येन सप्रयोजनतया रूपकं शब्दप्रतिपाद्यं भवेत्। न हि शीतार्थिनो वह्निः शिशिरतामुपयाति। न च शब्दशक्त्यभावेऽनुचितार्थपरिग्रहो युक्तः अन्यथोपमापरित्यागात्ततोऽतिशयवदुत्प्रेक्षाद्येव सर्वत्र यथा कश्चिद् गृह्येतेत्युपमादेरस्तमयः स्यात्। अतश्च न सन्देहः यत्रवद्भिरेव सन्देहोऽभ्युपगतः। सन्देहो ह्युपमापक्षस्य बाधकाभावे भवति। अन्यथा रूपकनिश्चयप्रसङ्गात्। मुख्यार्थात्मकोपमाबाधकाभावे च कथं लाक्षणिकरूपकपक्षोल्लासः। तदनुल्लासे च कथं सन्देह इत्युपमैवात्र निश्चिता।

मुख्यार्थौपम्यबाधश्चेन्नास्ति तर्हि न संशयः।
रूपकस्य समर्थस्य तदानीं परिनिश्चयात्॥

यद्यपि चोपमासमासपक्षेऽपि लक्षणैव समासानां प्रायशो लक्षणारूपत्वात्तथाप्युपमायां समासे लक्षणा न तु वाक्ये। रूपके तु वाक्येऽपि लक्षणेत्येकत्र लक्षणान्यत्र लक्षितलक्षणेति उक्तपक्षेऽपि न तुल्यत्वम्। एवमुत्तरत्रोदाहरणादावपि सन्देहो न युक्तः। तथा चात्र तथापि तत्र सुरतव्यापारलीलाविधौ रेवारोधसि वेतसीतरुतले चेतस्समुत्कण्ठानुपपत्तेरेव साक्षाच्छब्देनावगमाद्विभावनैव निश्चितेति कस्सन्देहमभिदधीत अन्यत्र तथापीत्यत्राल्लानपदमनन्वयमात्रात् सहृदयमानिनः। एवमुदाहरणान्तरेषु विवेचनीयम्।

इत्थं साधकमानसम्भवबलात्सन्देहसंभावना
नालंकारगता कदाचिदपि यन्नाङ्गाङ्गिभावात्कचिन् ।
सर्वेषां विषयापहारकरणान्नैकाभिधानस्थितिः
संसृष्टयुक्तनयान्न तत्परिमितो युक्तस्त्रिधा संकरः ॥

तस्मात्समस्तविषयप्रतिबन्धकारे
संसृष्टिसङ्करयुगे दलिते विदूरम् ।
प्राधान्यतः स्वविषयं स्वविशालमाप्य
सर्वोऽप्यलंकृतिगणो रमतां चिराय ॥ इति

तदलंकारसन्देहाभावादङ्गत्वेनैव संकर इति स्थितम् । उदाहरणम्—

कुसुमसौरभलोभपरिभ्रमन्भ्रमरसंभ्रमसंभृतशोभया ।
चलितया विदधे कलमेखलाकलकलोलकलोलदृशान्यया ॥६२४॥

अत्र सकलवाक्यव्यापकत्वेन प्रधानस्यानुप्रासस्य परिपोषकत्वे स्थितं यमकमिति शब्दालंकारस्य यमकस्याङ्गतया यमकसंकरः । अर्थालंकाराणां यथा—

प्रभामहत्या शिखयेव दीपस्त्रिमार्गयेव त्रिदिवस्य मार्गः ।
संस्कारवत्येव गिरा मनीषी तया स पूतश्च विभूषितश्च ॥ ६२५ ॥

अत्र पूतत्वविभूषितत्वयोर्धर्मयोर्यौगपद्यात्समुच्चयस्य वाक्यार्थीभूतस्योपमाङ्गमित्युपमासंकरः । न चात्रोपमानामन्याङ्गभूतानामेकत्रावस्थानादस्ति संसृष्टिरिति वाच्यम् । यतः समुच्चयालंकार प्रतीयसप्यङ्गमयमपीति समुच्चयेनोपमानाना संगतत्वात् । उक्तनयेनार्थसमुच्चय एव स्यात् । अत एव मालोपमादय उपमाभेदत्वेनोपेक्षितास्तत्र ह्येकस्मिन्नुपमेये उपमानयौगपद्यादुपमासमुच्चयसंभवेनोपमाया अलंकारान्तरसङ्कीर्णत्वमेव युज्यते । न चालंकारान्तरसंसर्गनिबन्धनो भेद गणयितुं युक्तो भेदानन्त्यप्रसङ्गात् । रूपके तूक्तनयेनानेकपामारोपाणां यौगपद्यासंभवेन रूपकसमुच्चयायोगान्मालारूपकं भेदत्वेन लक्षितम् । न तु मालोपमादय । यथा वा—

यान्त्या मुहुर्वलितकन्धरमाननं त-
दावृत्तवृन्तशतपत्रनिभं वहन्त्या।
दिग्धोऽमृतेन च विषेण च पक्ष्मलाक्ष्या
गाढं निखात इव मे हृदये कटाक्षः ॥ ६२६ ॥

मा. मा. १. २९

अत्र कटाक्षस्य दृष्टस्य चेतसि प्ररोहाख्यो धर्मो निखातत्वाख्येन धर्मान्तरे निगीर्य संभावित इत्युत्प्रेक्षाया वाक्यार्थीभूताया हृदयशब्दस्य स्वान्तवक्षोरूपार्थद्वयप्रतिपादकत्वेन चेतसो वक्षसाभेदेनाध्यवसायाच्छ्लेषमूलातिशयोक्तिः निखातत्वोपपादकतयाङ्गम्। हृदये निखाततादिलक्षणवाक्यार्थाक्षिप्ता कटाक्षस्य बाणरूपतेत्युपादानेनान्यार्थगतिरूपं पर्यायोक्तमुत्प्रेक्षापरिपोषकम्। दिग्धोऽमृतेन च विषेणेति विरोधोऽपि वाक्यार्थपरिपोषकृत्। विरोधेन च वाच्येन बाधितमुख्यार्थतया कटाक्षस्यानन्दमोहात्मकविरुद्धकार्यद्वयोत्पादकताप्रतिपादनद्वारेण विलक्षणस्य विरुद्धकार्यद्वयस्योत्पादनरूपमचिन्त्यमपि लक्षितं प्रकृताङ्गम्। यान्त्यावृत्तवृन्तशतपत्रनिभमाननं वहन्त्येति उपमालंकृतोऽर्थ आवेगौत्सुक्यनिबन्धनमाकस्मिकदर्शनान्तरगमनसमये पुनःपुनरवलोकनं गाढप्रमानुबन्धनसूचकतया न कदाचिद् हृदयादपसरतीति गर्भितातिशयोक्तिर्निखाततोत्प्रेक्षानुप्राणिका एव। यद्यपि च मुहुश्शब्दस्य सकृदर्थतापि तथापीह सकृदवलोकनेनौत्सुक्यादिप्रतीतौ न रसपरिपोषकः कश्चिदिति पौनःपौन्यार्थे योजितः। प्रतिक्षणं विलोकनेन च कटाक्षाणामनेकत्वेऽप्येकत्वाभिधानागतया भेदेऽप्यभेदरूपयातिशयोक्त्या तदेकतानमानसतया कटाक्षविच्छेदेऽपि तदवधारणाद्विशेषोक्तिर्व्यज्यते। अन्योऽपि गजाद्यारूढो निवर्तमानो वलितकन्धरः पृष्ठानुलग्नानां हृदये बाणान् विषादिदिग्धान्क्षिखनतीत्यप्रकृतधर्मावच्छेदात्प्रकृतस्येति समासोक्तिरप्यङ्गम्। अयं चार्थः कविना संभावनयोल्लिखित इति सूक्ष्मवस्तुस्वभाववर्णनात्स्वभावोक्तिसहिता प्रतिभापि। हृदये निखात इवेत्युत्प्रेक्षयावयवान्तरवैलक्षण्येन हृदये सातिशयं पुनःपुनरपाङ्गनिवेशनेन पित्राद्दिपरतन्त्रतया कथमेतस्य महाभागस्योरःफलकविश्रमणं प्राप्यते इत्यशक्यालंकारो व्यज्यते। एवमत्र वाच्यानामुपमादीनां लक्ष्यस्य चाचिन्त्यस्य श्लेषपर्यायोक्तादेरर्थसामर्थ्यलभ्यस्य व्यङ्ग्यायाश्चातिश-

पोक्तेः साक्षात्पारम्पर्येण चाशक्यालंकाराङ्गभावात्सङ्करः । श्लेषादीनां च सर्वत्रार्थसामर्थ्यलभ्यतैव । न ह्यौपम्यप्रतिपादकेवादिवच्छब्दानेकार्थताप्रतिपादकं पदं किञ्चित्कुत्रचित्प्रयुज्यते । नापि लक्षणा, मुख्यार्थबाधाद्यभावात्, किन्तु वाक्यस्वरूपप्रतिपादनालभ्यमनेकार्थत्वादिकमित्यर्थसामर्थ्यतैव श्लेषादेः । यथा वा—

अण्णत्थ कुणसु जोण्हां मा चन्द समुद्दवरिसओ होहि ।
उज्जोइअं घरं णो दइआमुहचन्दकन्तीए ॥ ६२७ ॥
[ अन्यतः कुरुष्व ज्योत्स्नां मा चन्द्र समुद्रवर्षको भव ।
उद्योतितं गृहमस्माकं दयितामुखचन्द्रकान्त्या ॥ ]

अत्रान्यत्र ज्योत्स्नाकरणनिषेधार्थमिति परिसंख्याया वाक्यार्थीभूताया मा चन्द्र समुद्रवर्षको भवेति समुद्रवर्षसम्बन्धाभावात्तत्सदृशमस्मद्गृहे ज्योत्स्नाकरणमिति प्रतीत्या निदर्शनालंकृतोऽर्थो हेतुतयोपात्तत्वादङ्गम् । समुद्रवर्षणवद्भूत्वा ज्योत्स्नाकरणरूपस्य प्रयत्नस्य विगतफलत्वेन विचित्रमपि निदर्शनाङ्ग मत्परिसंख्याया. परिपोषकम् । व्यर्थतायाश्चोपपादनार्थं ज्योत्स्नाकरणस्य कार्यं गृहद्योतनरूपमन्यतस्सिद्धमिति द्वितीयार्धे हेतुरुपात्त· इति हेत्वलंकारः । अधिकगुणायाश्च ज्योत्स्नाया अनादरात्मकं प्रतीपमर्थसामर्थ्यप्रतीतं शाब्देन वृत्तेन वाक्यार्थीभूतायाः परिसख्यायाः फलमिति शाब्दतः परिसंख्यायाः प्रधानत्वेऽपि प्रतीपस्यार्थात्प्राधान्यम् । यथा वा—

तावमवणेइ ण तहा चन्दणपङ्को वि कामिमिहुणाणं ।
जह दुस्सहे वि गिम्हे अण्णोण्णालिङ्गणमहग्घी ॥ ६२८ ॥
[ तापमपनयति न तथा चन्दनपङ्कोऽपि कामिमिथुनानाम् ।
यथा दुःसहेऽपि ग्रीष्मेऽन्योन्यालिङ्गनसुखर्द्धिः ॥ ]

अत्र चन्दनपङ्करूपादुपमानादन्योन्यालिङ्गनस्याधिक्येन तापापनयाद् व्यतिरेकस्य तापजनकाद् गाढालिङ्गनात् तापस्योपशम इति व्याघातसंकरः । यथा वा—

अहरन् हृदयं तस्य शृङ्गाररहितविभ्रमाः ।
नितम्बिन्यो वनभुवः शमिनो न तु योषितः ॥ ६२९ ॥

अत्र नितम्बिनीनां मुख्यात् (?) वनभुवां हृदयहरणं न तु योषितामिति असाकल्यात्मकं विषमम्। तस्य च शृङ्गाररहितविभ्रम इति श्लेषमूलातिशयोक्त्या साम्येन योषिल्लक्षणनितम्बिनीरूपकारणसद्भावेऽपि चेतोहरणकार्यानुत्पादात् शमिन इति उक्तनिमित्तदर्शितव्याप्तिका च विशेषोक्तिरङ्गम्। वनभुवश्चेतोहरणकर्तृत्वे ज्ञापिते ज्ञापन( ? अन्य )योषिन्निषेधार्थमिति परिसंख्यापि। यथा च

चन्दसरिसं मुहं से सरिसो अमएण मुहरसो तिस्सा।
सकअग्गहणभासुज्जलचुम्बणं कस्स सरिसं से॥ ६३०॥
[ चन्द्रसदृशं मुखमस्य सदृशोऽमृतेन मुखरसस्तस्याः।
सकचग्रहणभासोज्ज्वलचुम्बनं कस्य सदृशमस्याः॥ ]

अत्र सुधाधररसयोः चन्द्रामृतसमत्वेन रभसचुम्बनस्य न केनचित्साहश्यमिति सामर्थ्यात्प्रतीतेरसमालंकारो वाक्यार्थीभूतस्य सर्वेषां सदृशवस्त्वभावादसाकल्याख्यस्य विषमस्याङ्गम्।

मरणाहिन्तो अहिअं ण दुक्करं अत्थि जीवलोअम्मि।
उप्पज्जइ तद्दुक्खं मरणं जस्सोसहं होइ॥ ६३१॥
[ मरणादधिकं न दुष्करमस्ति जीवलोके।
उत्पद्यते तद्दुःखं मरणं यस्यौषधं भवति॥ ]

अत्र सातिशयदुःखरूपतया सर्वदा निश्चितस्य मरणस्य दुःखान्तरोत्पत्तिसमये दुःखमात्रतयावगम इति परभागस्य दोषात्मकादपि मरणस्यौषधरूपतया गुण इति व्यत्यासः परिपोषकृत्। यथा वा—

रक्खउ वो दरपीअत्थणस्स बीअं त्थणं पि मग्गन्तो।
हत्थो हरहरिअउरद्धभागभमिरो कुमारस्स॥ ६३२॥
[ रक्षतु वो दरपीतस्तनस्य द्वितीयं स्तनमपि मार्गयन्।
हस्तः हरहृतउरोर्धभागभ्रमणशीलः कुमारस्य॥ ]

अत्र स्तनद्वयस्य साहचर्येणोपनिबद्धस्यैकदर्शनात्स्तनान्तरं संस्कारप्रबोधने न तदस्तीत्यनवगमाद् भ्रान्तिमान् करभ्रमणरूपस्य प्रयत्नस्य मोघतया विगतफलत्वमिति विचित्रस्योपस्कारकः । यथा वा—

क्लान्तानि वक्त्राणि विहारकेलिविशारदानां शरदातपेन ।
वामभ्रुवां चन्द्रिकया क्रियन्ते श्रीखण्डचर्चासु निरादराणि ॥६२३॥

अत्र श्रीखण्डचर्चासु निरादराणि चन्द्रिकया क्रियन्ते इति तापापनयरूपस्य कार्यस्य चन्द्रिकारूपात्कारणान्तरात् प्रासादधिकगुणस्य श्रीखण्डचर्चात्मकस्य कारणान्तरस्यानादर इति प्रतीपस्य शरत्प्रवृत्तेरातपमुखेनोत्पन्नस्य दोषरूपस्य सन्तापस्य चन्द्रिकामुखेन निवारणरूपेण गुणेन समाधानात्समताङ्गत्वम् । स्थितस्य च क्लान्तत्वस्य चन्द्रिकया निवारणात्प्रत्यादेशच्छाया । यथा वा—

एक्केण कवडवलिबंधणेण भुवणे ण माइ गोविन्दो ।
अच्छरिअं भमइ पिआ ओणमिअमुही तिवलिबन्धे वि ॥ ६२४ ॥
[ एकेन कपटबलिबंधनेन भुवने न माति गोविन्दः ।
आश्चर्यं भ्रमति प्रियावनतमुखी त्रिवलिबन्धेऽपि ॥ ]

अत्र कस्यचित्परिमितमपि अपूर्वं किंचित्करवतोऽतीव (?) दर्पो भवत्यन्यस्य त्वपरिमिततथाविधरचनया गर्वस्य न लेशोऽपीति प्रस्तुतस्याप्रस्तुतमुखेन प्रतिपत्तिरित्यप्रस्तुतप्रशंसायाः श्लेषमूलातिशयोक्तिगर्भो गोविन्दात्प्रियाया व्यतिरेकः । तथा च एकबलिबन्धनेन गर्वोत्पत्तिदर्शनेन दर्शितन्यासिका त्रिवलिबन्धेऽपि न गर्वोत्पत्तिरित्यनुक्तनिमित्ता विशेषोक्तिः । यद्यपि चात्र शाब्देन वृत्तेन प्राधान्यात् विशेषोक्तेरेव वाक्यार्थीभावस्तथापि प्रस्तुतवस्तुप्रतिपादनतात्पर्येण वाक्यप्रवृत्त्या सामर्थ्यावसितायाः अप्रस्तुतप्रशंसाया मुख्यतेति प्रदर्शितन्यासिका विशेषोक्तिः परिपोषकत्वेनैव न्याय्यः ॥ राम । समाप्तोऽयमलंकाररत्नाकरः कृतिर्महामहोपाध्यायभट्टत्रयीश्वरमन्त्रिपुत्रस्य तत्रभवत पण्डितभट्टश्रीशोभाकरमित्रस्य ॥

श्रीश्रीवर्मपुत्रेण प्रज्ञालववता मया ।
रत्नाकराभिधः पोषेऽलंकारो लिखितः शुभः ॥

# अलंकाररत्नाकरसूत्राणि ॥

१ आमुखैकार्थपदं पुनरुक्ताभासम् ।

२ तुल्यरूपसमुदायावृत्तिर्यमकम् ।

३ द्वयोर्द्वयोः समुदाययोः साम्यं छेकानुप्रासः ।

४ अन्यथा तु वृत्त्यनुप्रासः एव ।

५ तुल्याभिधेयभिन्नतात्पर्यशब्दावृत्तिर्लाटानुप्रासः ।

६ पद्मादिलिपिवर्णवच्चित्रं च चित्रम् ।

७ उपमानेनोपमेयस्य सादृश्यमुपमा ।

८ कल्पितेन कल्पितोपमा ।

९ तेनैव तदेकदेशेनावसितभेदेन वानन्वयः ।

१० तद्विरहोऽसमः ।

११ परस्परमुपमानोपमेयत्वमुपमेयोपमा ।

१२ सामान्योद्दिष्टानामेकस्य निदर्शनमुदाहरणम् ।

१३ अन्यधर्मयोगादार्थमौपम्यं प्रतिमा ।

१४ सकृद्धर्मस्य निर्देशेऽप्रस्तुताना प्रस्तुताना वा तुल्ययोगिता ।

१५ मिश्राणा दीपकम् ।

१६ वाक्यद्वयेऽसकृत्प्रतिवस्तूपमा ।

१७ प्रतिबिम्बेन दृष्टान्तः ।

१८ असति सम्बन्धे निदर्शना ।

१९ सदृशानुभवात्स्मरणे स्मृतिः ।

२० अन्यासङ्गात्कौतुकविनोदो विनोदः ।

२१ अनुभवस्मृत्यादिप्रत्यूहो व्यासंगः ।

२२ उपमेयादन्यस्य न्यूनत्व प्रतिकूलत्वं वा व्यतिरेकः ।

२३ सजातीयस्यातद्धर्मत्वं च ।

२४ अधिकगुणस्यानादरः प्रतीपम् ।

२५ उद्दिष्टस्य प्रतिपक्षतयानुनिर्देशो वैधर्म्यम् ।

२६ आरोपो रूपकम् ।

२७ नियतधर्महानावारोप्यमाणस्यातिसाम्यमभेदः ।

२८ प्रकृतोपयोगित्वे परिणामः ।

२९ विषयस्य मुख्यस्य वापह्नवेऽन्यविधिरपह्नुतिः ।

३० तस्यापि सन्दिह्यमानत्वे सदेहः ।

३१ सम्भावितसम्भाव्यमानापोहो वितर्कः ।

३२ विषयित्वेन सम्भावनमुत्प्रेक्षा ।

३३ अन्यरूपतया निश्चयो भ्रान्तिमान् ।

३४ एकस्यानेकधा कल्पनमुल्लेखः ।

३५ सम्भाव्यमानस्य प्रतिमा ।

३६ यद्यर्थोक्तावसम्भाव्यमानस्य क्रियातिपत्तिः ।

३७ अध्यवसानमतिशयोक्तिः ।

३८ अप्रस्तुतादन्यप्रतीतिरप्रस्तुतप्रशसा ।
३९ स्तुतिनिन्दाभ्या व्याजस्तुतिः ।
४० प्रतिपक्षादिसम्बन्धिस्वीकारः प्रत्यनीकम् ।
४१ विना कंचित्सदसत्त्वे विनोक्तिः ।
४२ सहार्थवशादेकस्यानेकसम्बन्धे सहोक्तिः ।
४३ विशेषणाना साम्यादप्रस्तुतधर्मावच्छेदः समासोक्तिः ।
४४ विशेष्यस्यापि साम्ये द्वयोर्वाच्यत्वे श्लेषः ।
४५ साभिप्रायत्व परिकरः ।
४६ सापेक्षत्वादुपादानेनान्यप्रतीतिर्भङ्ग्यन्तरेण वाभिधानं पर्यायोक्तम् ।
४७ विहितस्याशंकितस्य वा विशेषावगमाय निषेधो निश्चय· ।
४८ इष्टनिषेध आक्षेपः ।
४९ अनिष्टविधानं विध्याभ्यासः ।
५० सन्दिह्यमानयोरेकत्र तात्पर्येच्छा सन्देहाभासः ।
५१ विकल्पितयोर्विकल्पाभास· ।
५२ विरुद्धाभासत्व विरोधः ।
५३ हेत्वभावे फलोत्पत्तिर्विभावना ।
५४ हेतुसाकल्ये फलानुत्पत्तिर्विशेषोक्तिः ।
५५ तयोर्देशकालान्यथात्वमसगति ।
५६ रूपधर्मयोः परस्परनिबन्धनत्वमन्योन्यम् ।
५७ धर्मिधर्मभावस्य धर्माणा वा विनिमयो विपर्ययः ।
५८ अविलक्षणाद्विलक्षणकार्योत्पत्तिश्चाचिन्त्यम् ।
५९ अर्थानर्थपदे तदन्यस्योत्पत्तिर्विषमम् ।
६० विरूपकार्योत्पत्तिर्विरूपसंघटनमसाकल्यं च ।
६१ तद्विपर्ययः समम् ।
६२ विफलः प्रयत्नो विचित्रम् ।
६३ अनाधारमाधेयमेकमनेकगोचरं सम्भाविताद्धिकस्य विरुद्धस्य वा संपत्तिश्च विशेषः ।
६४ उत्पत्तिविनाशयोरेकोपायत्वे व्याघात ।
६५ प्रतिबन्धकादेर्विधानासामर्थ्यमशक्यम् ।
६६ दोषगुणयोरन्यथात्वं व्यत्यासः ।
६७ तदन्याभ्या समाधानं समता ।
६८ सजातीयविजातीयाभ्या तुच्छत्वमुद्रेकः ।
६९ निवृत्तावन्योदयस्तुल्यम् ।
७० अप्राप्तार्थं तत्तुल्यानादरोऽनादरः ।
७१ त्यक्तस्वीकार आदरः ।
७२ हेत्वन्तरादन्यस्यापि तथात्वमनुकृति ।
७३ भासस्य प्रतिबन्धः प्रत्यूहः ।
७४ स्थितस्यान्यथापत्तिः प्रत्यादेशः ।
७५ उपोद्बलनं समाधिः ।

७६ विशेषस्यान्येन समर्थनमर्थान्तरन्यासः ।

७७ सर्वथा सम्भवोऽसम्भवो वा व्याप्तिः ।

७८ साधनात्साध्यप्रतीतिरनुमानम् ।

७९ परप्रत्यायक लिङ्गं हेतुः ।

८० अनिष्टापादनमापत्तिः ।

८१ दण्डापूपिकयापतनमर्थापत्तिः ।

८२ असम्भाव्यहेतुफलप्रेषण विधिः ।

८३ अन्यनिषेधार्थोऽपि विधिर्नियमः ।

८४ प्राप्तस्य परिसंख्या ।

८५ प्रत्यापत्तिः प्रतिप्रसवः ।

८६ नानाफलप्रयुक्तः प्रयत्नस्तन्त्रम् ।

८७ प्रसङ्गादन्यार्थः प्रसङ्गः ।

८८ विरुद्धयोस्तुल्यत्वे पाक्षिकत्वं विकल्पः ।

८९ धर्मयौगपद्यमन्यस्यापि तत्करत्वं च समुच्चयः ।

९० विनिमयः परिवृत्तिः ।

९१ क्रमेणैकमनेकत्रान्यथा वा पर्यायः ।

९२ आरोहावरोहादिः क्रमः ।

९३ रूपधर्माभ्यामाधिक्य वर्धमानकम् ।

९४ विपर्ययोऽवरोहः ।

९५ सम्भावनयाऽन्यथा वातिशयोऽतिशयोक्तिः ।

९६ उत्तरोत्तरस्य पूर्वपूर्वानुबन्धित्वं विपर्ययो वा शृंखला ।

९७ अन्यधर्मस्वीकारस्तद्गुणः ।

९८ धमसाम्याद्भेदाप्रतीतिर्मीलितम् ।

९९ तस्या कुतश्चिद्विवेको विवेकः ।

१०० अनुभूतस्यार्थान्तरोपलब्धौ परभागः ।

१०१ निगूढस्य प्रतिभेद उद्भेदः ।

१०२ गूढसाकाक्षोपनिबद्धं गूढम् ।

१०३ सूक्ष्मार्थसूचनं सूक्ष्मम् ।

१०४ उद्भेदप्रच्छादन व्याजोक्तिः ।

१०५ अन्यथा सम्भावितयो शब्दार्थयोरन्यथा योजन वक्रोक्तिः ।

१०६ सम्यक् स्वभाववर्णन स्वभावोक्ति. ।

१०७ विप्रकृष्टस्य प्रत्यक्षायमाणत्व भाविकम् ।

१०८ उदारचरिताङ्गत्वमुदात्तम् ।

१०९ रसभावतदाभासाना रसाद्यङ्गत्वे रसवत्प्रेयऊर्जस्वीनि ।

११० एतेऽङ्गित्वेऽलङ्काराः ।

१११ न संसृष्टिः पूर्वहानाच्चारुत्वाभावाच्च ।

११२ अङ्गत्वेऽतु सङ्करः ।

अलंकाररत्नाकरसूत्राणि समाप्तानि ॥

# अकाराद्यनुक्रमेण अलंकाररत्नाकरस्थोदाहरणानुक्रमणिका ।

The figures refer to verses.



१ वै ६६ २ वि २२५ ३ विक्रमा. ५/८६, वि १७२. ४ वि. ९८. ५ वि १७२. ६ गा १/४८, स.क ५/३८८ ७ नवसा. १२/४१; वि. १८०. ८ गा. ७/६७, ध्व. २०, का. प्र. ३ २३, ५/१३७. ९ वि. १८०. १० का. प्र. ५/११९, वि २३८ ११ नवसा. ६/९८. १२ बालरा. १०/१०, का. प्र. ५/११६, वि ३३१. १३ नवसा ३/१. १४ गा ३/२५. १५ का प्र. ५/१२८ १६ कु. १/३. १७ उत्तर. ४/४. १८ विक्रमा. ९/९१; वि. १३४. १९ स क. ४/५९ २० शिशु. २·४४ २१ का. प्र. १०/५४६ २२ अ. स. ९६. २३ नवसा. ४/१८, वि. २११. २४ का प्र. ४/५७. २५ का. प्र. १०/४३२; अ स. ६६.

२६ नवसा. ५/५६; अ. स ५४. २७ का. प्र १०/४१८. २८ वि. १८३. २९ अ. स. १००. ३० गा १/२०; स. क. ५/१६८. ३१ का. प्र. १०/४३०; त्रि. ६५. ३२ विक्रमा. ८/४४. ३३ विक्रमा १/१०; का. प्र. १०/४२०; अ. स. ८६. ३४ गा. २.२७. ३५ का. प्र. १०/५५९; अ. स २१०. ३६ नवसा १/१०. ३७ रघु. १/१५. ३८ वि. ९९. ३९ वि ९३. ४० कु ३/५४; वि. ३७. ४१ विक्रमा. ३/७५. ४२ वि. ११२. ४३ दालरा. १/४२; स. क. ४/१०३; अ. स. १४३ ४४ वि. २१४. ४५ स. क. ४/५२९.

---

४६ नवसा १०/६ ४७ गा ५ ७६ ४८ मा मा ५/१६, का. प्र. ४/४३ ४९ नवसा १८/३ ५० गा. ३ ४८. ५१ वामन ४/३/१०. ५२ वि २२ ५३ शिशु ४ २६ ५४ गा १ २५ ५५ गा ४/३. ५६ ध्व. १२४ ५७ वि २२१. ५८ रघु. १३/२३, अ स ७३/ ; वि ८१. ५९ का प्र ४/४६ ६० कु २/४२, अ स. १७१. ६१ विक्रमा ९/९८ ६२ वेणी ५/२६. ६३ मे. १/१. ६४ कु. १/९; स क. ५/१०३, वि ३३१. ६५ अ स ७६ ६६ ध्व. २३; स. क ४/८५, का प्र ५/१३६.

---

६७ नवसा १/८७ ६८ का प्र १०/५३५, अ. स. २१७. ६९ वि. २०८ ७० वि. १८०. ७१ का प्र १०/५२२, अ. स. १९३; वि. १९६. ७२ कु ५/४४; अ. स. १९२. ७३ वि. ५४. ७४ वि. ५. ७५ का. प्र १०/५२३; अ. स. १९३. ७६ गा ३ ७२ ७७ वि. १८०. ७८ शिशु. ११/६४, स. क. ३/७८. ७९ स क. ५/३६८; का. प्र. १०/५०८, अ स. २०३; वि. १७४. ८० शिशु. ६/१४; का. प्र. १०/५६८. ८१ नवसा. ९/५५ ८२ रु का. प्र. १०/४६२; अ स. १०२. ८३ शिशु. १०·३; स. क. ३/१४५ ८४ स. क. १/११७, का. प्र. ४/५४; अ. स. २४०. ८५ वामन ४/३/१५; अ. स. ४०.

---

८६ वि २०८ ८७ गा ६ ६६. ८८ विक्रमा ११/६६. ८९ शिशु १/१. ९० वि ३९ ९१ गा. ३ ९७. ९२ का प्र. ४/६४, वि १७४. ९३ स क ४/१२५; का प्र. १०/४८०,° वि १४१. ९४ विक्रमा ८/५७ ९५ का प्र. १/३, वि. ६ ९६ अ स ९५. ९७ नवसा. १/४ ९८ गा. ३/१३, स क. ४/२, ५/१४४. ९९ शिशु १/३ १०० वालरा २/३७, का प्र. ७/२०३ १०१ अ स. ९७. १०२ वि. १७३ १०३ स क. २/३७०. १०४ का प्र ५/१३५. १०५ का. प्र. १०/५७४

---

१०६ गा. ३/३०, ध्व. ११३ १०७ विक्रमा. ७/१०, वि. ९९. १०८ नवसा' १/३३. १०९ गा. ३/१२ ११० ध्व. लो. ११६; का. प्र. १०/४०७. १११ वि १५९. ११२ का प्र ४/८९. ११३ अ. स. ६१. ११४ त्रि २०८ ११५ का प्र. ३/१८ ११६ कु ५/८५; स. क. ५/७, वि. १५६. ११७ अ. स. १३३. ११८ नवसा. २/९७. ११९ रघु. ५/६७, वि. ४०. १२० का. प्र. ९/३९१. १२१ नवसा. १२/४६. १२२ स क. ३/८१: अ. म. १९२.

---

१२३ गा. ३/८८, स क.५/२१३. १२४ गा.२/७९ १२५ गा ३/७
१२६ अ. स. १२७ १२७ विक्रमा ८/९, अ. स ९८
१२८ प्रति. ६०; अ. स ९० १२९ गा १/८५. १३० गा ४/१९
१३१ नवसा २/५८ १३२ वि. ५७. १३३ रु ९/६, का प्र. १०/५६०.
१३४ ४/५ १३५ नवसा १/४३ १३६ वि. १३३ १३७ वि १४७.
१३८ वि ४९ १३९ विद्ध. १/४, का प्र. १०/५६७, अ स. १७४.
१४० विक्रमा ७/१२ १४१ द रू १/१९; स. क. १/११८
१४२ विक्रमा. ७/८, अ. स. १५०.

---

१४३ अ स. १४५ १४४ वि. ५५ १४५ रु ७/२९; का प्र. ४/२७ १४६ श्रीकण्ठ ५/२३, अ स. ११४ १४७ अ स १६९. १४८ वि १७१ १४९ का प्र. ४/६२ १५० अ स. १३७. १५१ गा ७/६५; का प्र १०/५५; अ. स २१५ १५२ गा ३/९१. १५३ भल्लट ४; का. प्र. १०/५१३, अ स. १९० १५४ नवसा १/५३ १५५ वि ६३ १५६ कु १/३६, वि १०३. १५७ विक्रमा १०/३४. १५९ नै १/१ १६० का. प्र ४/५७, वि. १५९. १६१ अ. स १९१.

१६२ विक्रमा. १४/६१ १६३ गा ४/४१ १६४ नवसा १२/३६; वि १११ १६५ मा मा. १/४०. १६६ गा ४/८४ १६७ गा. ४/२६; स. क. ३/१२७. १६८ कु १/४४, स. क. ५/११० अ. स. ८६. १६९ गा ४२. वि ५८ १७० वि ४१ १७१ बालरा १/४८, अ स १४०. १७२ रघु १/२४, वि. १८५. १७३ नवसा. १०/४७. १७४ विक्रमा. ४/११९. १७५ वि ९७ १७६ कु १/२८ ध्व. २०९ अ स ३३. १७७ ध्व. १०९. १७८ अमरु १०२, अ स १७२ वि. ५६ १७९ वि १७१

---

१८० गा. ४/६९ १८१ वि. २४ १८२ का. प्र ५/१२०; वि. २३८. १८३ विक्रमा १०/५६; वि. ८४ १८४ गा. १/७२, स. क. ५/४४६. १८५ गा २/९८. १८६ विक्रमा० ७/१०, अ स १५०. १८७ शिशु. ४-३८. १८८ का. प्र. १०/५२५; अ स. १९४. १८९ . ११/३ १९० विक्रमा. १६/१४. १९१ विक्रमा ११/५४. १९२ वामन ४/३/१०, का प्र. १०/५५८, अ. स २१३. १९३ गा. २/८२; का प्र. ४/७२; अ. स ७६; वि. ७. १९४ कु १/२७ १९५ गा. ४/४४, स. क. ५/२१५ १९६ वि १७७ १९७ का. प्र. ५/१३४, ७/२६३

१९८ काव्या २१, का प्र. १० ५३५, अ. स २०५ १९९ का. प्र. १०/५०५, अ स २३०. २०० का प्र १०/४९७, अ स. १०७. २०१ का प्र १०/५०४ २०२ विक्रमा. १/९५ २०३ का. प्र. १/१; अ. स १६१ २०४ वि २१७ २०५ कु १/१४. २०६ का. प्र. १०/५१९, अ. स १८५ २०७ वि. १७६ २०८ स क २/३७८. २०९ अ स ६४ २१० विक्रमा. ७/११, अ स. १५१ २११ वि ४३. २१२ विक्रमा ९/१२७ २१३ मा मा. १/२९; अ.स ३३ २१४ अ स ३८. २१५ का प्र १०/५४८, अ स २१२ २१६ अ स ११४. २१७ अ.स. ४२.

२१८ मतीहा ६०, अ. स ९०. २१९ वि १८५ २२० रघु ४/२९, वि ६, २९ २२१ विक्रमा ७/६, अ स. ८१. २२२ रु ७/९७ स. क. ३/५७, का. प्र १०/५३३, अ. म १८०. २२३ गा ४/११; वि १२१. २२४ ध्व २०७ २२५ वामन. ४/४ ध्व २०५, स क ४/१०२. २२६ मृ १/३२; काव्या० २/३६२, स क ५/५०४, काव्या. १०/४१७; अ म्र. ७४. २२७ गा ४/२२ २२८ का. प्र. १०/५३१. २२९ ध्व. २१. २३० गा. ५/७८ २३१ कु १/१० स. क ३/१८; वि. ४९. २३२ स. क. ४/४१६. २३३ विक्रमा. ३/३४. २३४ ध्व ३/; का. प्र. १०/५२९ २३५ वि. १७४. २३६ रु. ७/२८ का प्र १०/५१०; अ.स. २०१ २३७ विक्रमा. १७/१

---

२३८ विक्रमा १६/१७, वि १७१ २३९ विक्रमा. १०/७२.
२४० शिशु ४/१४, स क २/१७६, का प्र १०/५६४, अ. स. २१४.
२४१ नवसा १/४६, अ स १९४, अ. स ११३ २४२ का प्र ४/९२.
२४३ वि २१० २४४ रघु १३/२, वि ३३ २४५ नवसा ६/५०.
२४६ का प्र ४/६०. २४७ नवसा ११/८२ २४८ वि. २७, ११९.
२४९ शाकु १/१७ २५० का प्र १०/५२१, अ स २१८ २५१ विद्ध. ३/१;
का प्र ७/२७६ २५२ नवसा. ११/९६. २५३ नागा १/५.
२५४ वि २७. २५५ का. प्र. १०/५१४ २५६ का प्र १०/४७६..

२५७ गा. १/१२; स. क ५/२५८. २५८ रघु २/१५; अ. स. ९२; वि १२१ वि. १२८ २५९ गा ४/२६, स क. ५/२६७; वि १८३. २६० रघु. ८/७. २६१ नवसा. १६२, का प्र. १०/५४०; अ. स. १६५ २६२ विक्रमा. १३/६८. २६३ शिशु. २/३३ २६४ नवसा १२/३४. २६५ अ. स. १५१. २६६ का. प्र. १०/४०५; वि. ४०. २६७ कर्पूर २/१; का. प्र. १०/४९५. २६८ गा २/८०; स. क. ३/५२. २६९ का. प्र. ७/३१५; वि. २९. २७० अ स. ११५ २७१ गा ३/५०. २७२ विक्रमा. ६/२८. २७३ गा. ४/३२. २७४ अ. स. १४७.

# परिकरश्लोकानां सूचिः

The figures refer to pages.